पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन सम्मानितम्

द्वैतवेदान्ते

# पदवृत्तिस्वरूपविचारः

नवदेहलीस्थराष्ट्रियसंस्कृतसंस्थानेन
विद्यावारिधिः (Ph.D.) इत्युपाधिप्रदानेन
सम्मानितोऽयं शोधप्रबन्धः

प्रबन्धा
डा. एच्. सत्यनारायणाचार्यः
न्यायप्राध्यापकः, पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु-२८

2005

पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन सम्मानितम्

# द्वैतवेदान्ते
# पदवृत्तिस्वरूपविचारः

नवदेहलीस्थराष्ट्रियसंस्कृतसंस्थानेन
विद्यावारिधिः (Ph.D) इत्युपाधिप्रदानेन
सम्मानितोऽयं शोधप्रबन्धः

प्रबन्धा
डा. एच्. सत्यनारायणाचार्यः
न्यायप्राध्यापकः, पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम् बेङ्गलूरु - २८

२००५

*पूर्णप्रज्ञसंशोधनमन्दिरग्रन्थमाला - २३*

**द्वैतवेदान्ते पदवृत्तिस्वरूपविचारः**

**नवदेहलीस्थराष्ट्रियसंस्कृतसंस्थानेन विद्यावारिधिः (Ph.D.) इत्युपाधिप्रदानेन सम्मानितोऽयं शोधप्रबन्धः**

प्रबन्धा- डा. एच्. सत्यनारायणाचार्यः

प्रकाशकः -
पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, कत्तरिगुप्पा मेन्‌रोड्,
बेङ्गलूरु - २८

प्रथममुद्रणम् - २००५

मुद्रितपुस्तकसङ्ख्या - १०००

मूल्यम् - ६० रूप्यकाणि

राष्ट्रोत्थानमुद्रणालयद्वारा मुद्रितम् ।

**POORNAPRAJNA SAMSHODHANA MANDIRAM**
Recognised by Rashtriya Sanskrit Samsthan, Deemed University,
Ministry of H.R.D., Govt. of India, New Delhi

# Dvaitavedāṇte

# Padavṛttiswarūpavicāraḥ

**Approved by**
**Rashtriya Sanskrit Samsthan, New Deli**
**for the award of Vidyavaridhi (Ph.D.)**

*By*
**Dr. H. Satyanarayanacharya**
Lecturer in Nyaya, Poornaprajna Vidyapeetha, Bangalore.

***Publisher :***
**Poornaprajna Samshodhana Mandiram**
**Poornaprajna Vidyapeetha,**
**Bangalore - 560 028**

**2005**

Poornaprajna Samshodhana Mandiram Series No. 23

**Dvaitavedānte Padavṛttiswarūpavicārah**
**Approved by Rashtriya Sanskrit Samsthan, New Delhi for the award of Vidyavaridhi (Ph.D.)**

*By* : **Dr. H. Satyanarayanacharya**

*Published by* :.
**Poornaprajna Samshodhana Mandiram**
Poornaprajna Vidyapeetha, Bangalore - 560 028.

First Edition : 2005

Copies : 1000

Price : Rs. 60/-

# अनुग्रहसन्देशः

विषयोऽयं तत्रभवतां भवतां हृन्मन्दिरगोचर एव यत् पदवृत्तिस्वरूपम् अधिकृत्य चिन्तनं मथनं च विद्वत्सु चिरादपि प्रचलतीति । न केवलं तत्स्वरूपे, तत्प्रभेदविषयेऽप्यैकमत्यं न पश्यामो पण्डितमण्डल्याम् । शक्तिर्लक्षणा चेति वृत्तिर्द्विविधेति न्यायविदः । अभिधा, लक्षणा, गौणी चेति वृत्तिस्त्रिविधेति मीमांसकाः । इतोऽप्यधिकां व्यञ्जनावृत्तिमुररी-कुर्वन्त्यालङ्कारिकाः वैयाकरणाश्च । परन्तु द्वैतिनः परममुख्यवृत्तिः, मुख्यवृत्तिः, अमुख्यवृत्तिरित्यपूर्वं वृत्तित्रैविध्यपरिकल्पनमस्माकं पुरत उपस्थापयन्ति । तत्रापि परममुख्यवृत्तौ महायोगः, महायोगरूढिरिति द्वैविध्यम्, मुख्यवृत्तौ योगो रूढिर्योगरूढिश्चेति त्रैविध्यम्, अमुख्यवृत्तौ गौणी लक्षणा चेति द्वैविध्यम्, गौण्यामपि उपचाररूढोपचारभेदेन द्वैविध्यम् लक्षणायामपि निरूढलक्षणाकेवललक्षणाभेदेन द्वैविध्यमिति दशाधिकान् अवान्तरभेदान् अभ्युपगच्छन्ति ।

विषयमिमं अस्मत्प्रियशिष्यः डा. सत्यनारायणाचार्यः सोदाहरणं सप्रमाणं यथाग्रन्थं सविमर्शं निरूपितवानस्ति । द्वैतदर्शनपदस्वरूप-विचारजिज्ञासूनामयं प्रबन्धः महदुपकारमातनोतीत्यत्र नास्ति सन्देह-गन्धोऽपि । प्रियशिष्यमिमम् अस्मदुपास्यः श्रीकृष्णः ज्ञानभक्त्यादिनाऽ-नुगृह्णीयादिति प्रार्थयामहे ।

**श्रीविश्वेशतीर्थश्रीपादाः**

श्रीपेजावरमठाधीशाः

उडुपि

## The Concept of Dvaita Vedānta on *Padavṛttisvarūpa* (*Padavṛtti* according to the tenets of Madhva)

Man understands objects by his observation. Sense organs help him to comprehend. And also he understands by inference. These two methods have their own limitations. To know more about the objects, to have special knowledge we have to refer and discuss with more knowledeable persons who have experience and expertise in the matter. In other words we can know about objects by communicatoin - by words - *Śabda.* The words are the only means of knowledge. The entire activities of the world have been going with this instrument of knowledge- the word - *Śabda.* It is indeed unimaginable to think of the world without word - *Śabda.* The world without word is horribly confusing.

The very complicated process of understanding the purport by man when he hears a sound is a mystery. Only when one knows the particular language, he understands the word uttered. Of course, the word uttered in a language unknown to him makes no sense to him.

A word uttered gives a particular meaning of the word in the circumstances, to convey the meaning - the word in the context. Thus the word conveys meaning, a specific meaning with relevance. So it is

now clear that there is an inseparable bond between the word and its meaning. For example, the word 'mountain' means only mountain - a huge hill and not anything else. An entity cannot exist without its meaning. The word and its meaning are inseperable. The inseperable bond between the word and its meaning is called *Vṛtti* in the language of philosophy.

About the *Vṛtti* and its special aspects and derivatives a lot of thinking and debates have been. going on continuously in the schools of thoughts of Nyāya, Vyākaraṇa, Mīmāmsā. Though there are sharp differences of opinion on quite a few aspects, by and large, there have been points of concurrence also, and some decisions have been arrived at.

But Sri Madhvācārya who appeared in the field of philosophy prominently during 13th century has given some new and aspects on the concepts about *Vṛtti,* the like of which no other philosopher had given earlier. His point of view astonishes and convinces the rational and reasonable thinkers. Then his worthy disciples like legendary Sri Jayatīrtha and Sri Vyāsatīrtha have used this remarkable concept of Sri Madhvācārya in their works profusely while discussing the drawbacks in other schools of thoughts.

Bhātta Mīmāmsakas define *Vṛttisvarūpa* as *'Svārthabodhakatā padānām vṛttiḥ'.*

Prābhākaras hold the view declaring *'Pada-padārtha-sambandhayoḥ sambandhaḥ vṛttiḥ.'*

Naiyayikas give altogether a different saying *Śabda-bodhānukūla padārthopasthitihetu-padārtha-sambandho vṛttiḥ.*

Śri Vyāsatīrtha has discussed the wide discrepencies among these on the aspect of *Vṛtti* in his Tarka Tāndava and diclares *'Vṛttiśca Śabdasya tātsvarūpamartha-pratipādakatvam.'*

There have been points of differences on different aspect of *Vṛtti* classifications. Naiyāyikas accepts only two divisions, namely, *Śakti* and *Lakṣaṇā.* Mīmāmsakas argue that there should be three classifications, namely *Abhidhā, Lakśaṇā* and *Gauṇī.* Vaiyākaraṇas churb *Gauṇi* and *Lakṣaṇā,* in namely this combination *vyanjana,* a new *Vṛtti* - the third one. Even about the branches in *Śakti* and *Lakṣaṇā* there has not been a point of concurrence.

Sri Madhvācārya has made clearly three classifications - this trio - *Paramamukhya Vṛtti, Mukhya Vṛtti* and *Amukhya Vṛtti.* These three branches have more than ten sub-divisions in all. *Paramamukhya vṛtti* has been divided into two branches - *Mahāyoga* and *Mahāyogarūdhi.* Now *Mukhya vṛtti* has three sub-divisions. They are *Yoga,*

*Yogarūdhi* and *Rūdhi.* In *Amukhya vṛtti* there are only two sub-divisions. They are *Gauṇī* and *Lakṣaṇā.* In *Gauṇī* there are two divisions. Similarly in *Lakṣaṇā* has sub-divisions - namely *Kevalalakṣaṇā* and *Nirūdhalakṣaṇā.*

Dvaita school of thought logically establishes and upholds, with the strong support of scriptures that all words primarily mean- Brahma only, as he has all noble attributes in faultless perfection. When we declare all words mean Narayana only, it is alright for noble attributes. Narayana has all the noble and perfect attributes basically and intrinsically. But how about words of flaws like *Duḥkhi, Baddha* are used - thus the question is raised.

There could be many objections when all words mean God Narayana only. For example, if one were to say 'गच्छ स्नानं कुरु' (Go. Have a bath). How could it be गच्छ= Narayana, कुरु= Narayana. If every word could mean only Narayana how can the day-to-day activities in the world go on ? Many question are posed. Numerous problems are raised.

Here is the explanation. To answer these questions and solve the problems, many facts of the concept of 'every word mean only God' has to be viewed from different angles and at different stages. When it is said

that it is viewed from *Paramamukhya vṛtti*, it should be understood that every word has a primary meaning and also many subordinate and secondary meanings. While the primary meaning means only Narayana the secondary and subordinate mean other entities for carrying on all the activities of the world. This arrangement has scores and scores of strong sanctions and support from scriptures.

*'Nāmāni Sarvāṇi Yamāviśanti'*
*'Yo Devānām Nāmadhā Eka Eva'*

Keeping Narayana as the one who is conveyed by every word primarily and the rest of the entities with the secondary or subordinate meaning, there is an absolute necessity of accepting the three classifications *Paramamukhya Vṛtti, Mukhya Vṛtti* and *Amukhya Vṛtti.*

To give a clear picture of such an important and basic thinking an honest attempt is made in this short essay.

The necessary classifications with many variables and complexities and how to put each one under the apt division has been made taking into the consideration, the strong and weak points of support.

Dr. H. Satyanarayanacharya brought this thesis under the guidance of Prof. D. Prahlada Char and

presented new thoughts here very effectively. He is author and translator of several Sanskrit texts and a wellknown scholar in the field of Dvaita Vedanta. I expect more creative works from his active pen.

**Dr. A.V. Nagasampige**
Director

# ॥ भूमिका ॥

गुरुदेवतानुग्रहेणानुसंहितप्रकृतप्रबन्धमधिकृत्य किञ्चिदिव वक्तव्यम् अस्ति । अवश्यञ्चैतदनधिगतस्वरूपस्य प्रबन्धस्यास्यानुपादेयताशङ्काक्षालनार्थं, सदयसहृदयहृदयमण्डपेऽस्य प्रतिष्ठापनार्थञ्च ।

लोकः सर्वोऽपि शब्देनैवाधिगतहेयोपादेयविवेकः जहाति जिहासितमुपादत्ते चोपादित्सितम्; इष्टेषु प्रवर्तते निवर्तते चानिष्टात्; अवगच्छत्यतीन्द्रियमप्यात्मपोषकमध्यात्ममवगमयति च शिष्टानिति सार्वजनीनमेतत् । किं बहुनोक्तेन, शब्दाभावे न धर्माधर्मव्यवस्था, नापि गुरुशिष्योपदेशसम्प्रदायः, न चापि लोकव्यवहार इति सर्वोऽप्ययं जीवलोक अन्ध इव प्रशमितनिखिललोकव्यापारोऽसत्कल्पतामापद्येत । आदर्शितं हि काव्यादर्शे-

> इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम् ।
> यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥

इति । जगज्ज्योतिरूपोऽयञ्च शब्दः प्रत्यक्षादिषु बोधौपयिकेषु प्रमाणेष्वन्यतमत्वेनाभ्यषेचि ।

दृश्यन्ते च केचन दार्शनिकाः शब्दतत्त्वस्य प्रामाण्यमसहमानाः प्रत्यक्षैकप्रमाणिनश्चार्वाकाः, तत्पक्षलक्षीकृतदृष्टयः प्रत्यक्षानुमानोभयप्रामाण्यवादिनो बौद्धाश्च । अनुमाने एव शब्दमन्तर्भाव्य शब्दादप्यनुमितिरित्यभिमानेन शब्दस्य पृथक्प्रामाण्यमनङ्गीकुर्वन् वैशेषिकोऽपि दार्शनिकेष्वन्यतमः । परन्त्वेतेषु सर्वेषु पक्षेषु शाब्दयामीत्येतदनुव्यवसायानुपपत्तिः समानो दोषः । अनुमितेर्नियतपूर्वभाविनां व्याप्त्यादी-

नामननुसन्धान एव वाक्यार्थप्रतीतेरनुभवाच्च न वैशेषिकपक्षो न्याय्यः ।

तदेवं प्रमाणपदवीमध्यारूढेन शब्देन प्रमाकरणेन भाव्यम् । प्रमा च यथावस्थितार्थविषयकं ज्ञानम् । यथावस्थितार्थविषयकज्ञानजनकः शब्दः प्रमाणमिति यावत् ।

अर्थज्ञानजननञ्च शब्देनार्थसम्बद्धेनैव । असम्बद्धस्यार्थबोधकत्वे व्याघ्रपदेन सिंहबोधः कुतो न भवतीत्याक्षेपस्य किमुत्तरम्? ततश्चायं शब्द इममेवार्थं बोधयति नान्यमिति नियमस्य स्थितत्वात् तदुपपत्त्यर्थं पदपदार्थयोः कश्चन सम्बन्धोऽङ्गीकरणीयः ।

किञ्च 'अयं घटः' इति श्रुत्वा जानात्यर्थं संस्कृतज्ञः, नैवाप्य-संस्कृतज्ञः । कुत एतत्? तत्रैकेन पदपदार्थयोः (घटपदकम्बुग्रीवादि-मत्पदार्थयोः) सम्बन्धोऽवगत अत एव तस्य संस्कृतज्ञस्यार्थज्ञानम्; अपरस्य तु सम्बन्धज्ञानाभावादेवानवगतिरित्येव समाधातव्यम् । इत्थञ्च यथेन्द्रियेणार्थस्य संयोगादिः सन्निकर्षः, यथा वा लिङ्गस्य साध्येन व्याप्तिः प्रत्यासत्तिः, तथैव शब्देनार्थस्य कश्चन सम्बन्धोऽङ्गी-क्रियते । स एव वृत्तिः । स एव च पदवृत्तिः ।

वृत्तिशब्दस्तावदयमनेकार्थः। अन्तःकरणपरिणामरूपं ज्ञानं वृत्तिरिति वेदान्तिनः । निष्ठार्थक इति तार्किकाः । सूत्रार्थप्रदर्शकं वाक्यमिति वैयाकरणाः । रसप्रतिपादकः कैशिक्यादिः वृत्तिरित्यालङ्कारिकाः । परन्तु पदपदार्थसम्बन्धश्चापि वक्त्ययं वृत्तिशब्द इति समेषामेषां सम्मतम् । वर्तते= प्रवर्तते शब्दोऽर्थे अनयेति वृत्तिः । 'वृतु वर्तने'

इति स्वादिगणपठितधातोः बाहुलकात् करणे क्तिन् । तदेवम् अनेकार्थोऽयं वृत्तिशब्दः प्रायशोऽर्थान्तरव्यवच्छेदाय पदवृत्तिरिति व्यवह्रियते ।

तदेतस्याः पदवृत्तेः स्वरूपप्रभेदादिविषये नैकेषु दर्शनेषु नैके अभिप्रायाः परस्परं खण्डनमण्डनरूपेण प्रकटीकृताः । तथाहि- स्वार्थबोधकता पदानां वृत्तिरिति भाट्टानां मतम् । पदपदार्थयोः सम्बन्धः वृत्तिरिति प्राभाकराः । 'शाब्दबोधानुकूलपदार्थोपस्थितिहेतुः पदार्थसम्बन्धो वृत्तिः' इति गङ्गेशोपाध्यायः शक्तिवादे वृत्तिस्वरूपं जगाद । परन्त्वेतदसहमानाः व्यासतीर्थपूज्यचरणाः तर्कताण्डवे तेष्व-सारताप्रदर्शनपूर्वकं 'वृत्तिश्च शब्दस्य तात्पर्यरूपमर्थप्रतिमादकत्वम्' इति प्राहुः ।

न केवलं वृत्तिस्वरूपे, वृत्तिप्रभेदविषयेऽप्येवमेव विप्रतिपत्तिर्दार्शनिकेषु सन्दृश्यते । नैयायिकास्तावत् शक्तिर्लक्षणा चेति द्विविधामेव वृत्तिमुररी-कुर्वन्ति । या च गौणीति तृतीया वृत्तिर्वेदान्तिभिरङ्गीकृता सा लक्षणायामेवान्तर्भाविता नैयायिकैः । आलङ्कारिकैरभ्युपगताया व्यञ्जना-वृत्तेरपि अनुमानगतार्थतामभाणिषुरेते । अद्वैतसिद्धान्तोऽपीममेव पन्था-नमनुसरति । मीमांसकमते तु अभिधा लक्षणा गौणी चेति वृत्तिस्त्रिविधा । वैयाकरणाः पुनः गौणीं लक्षणायामन्तर्भाव्य गौणीस्थाने व्यञ्जनां तृतीयां वृत्तिमुररीकुर्वन्ति । इत्थमेव शक्तिलक्षणयोरवान्तर-प्रभेदविषयेऽपि दार्शनिकेष्वेषु सम्मतिः न दृश्यते ।

तदेवं मीमांसादिषु दर्शनेषु गौणीव्यञ्जनयोर्विषये विवादसत्वेऽपि सर्वत्रानुस्यूतः कश्चन समानोंऽशः बुद्धिगोचरो भवति । परन्तु

द्वैतवेदान्तोऽत्रात्यन्तविलक्षणं पन्थानमनुसरति । परममुख्यवृत्तिर्मुख्य-वृत्तिरमुख्यवृत्तिश्चेति वृत्तित्रैविध्यपरिकल्पनं दर्शनेष्वेवेदंप्रथमत आविष्कृतम् । एतास्वपि वृत्तिषु दशाधिका अवान्तरप्रभेदाः स्वीकृताः। परममुख्यवृत्तौ महायोगः, महायोगरूढिश्चेति द्वैविध्यम्; मुख्यवृत्तौ योगो रूढिर्योगरूढिश्चेति त्रैविध्यम्; अमुख्यवृत्तौ गौणी लक्षणा चेति द्वैविध्यम्; गौण्यामपि उपचाररूढोपचारभेदेन द्वैविध्यम्; लक्षणायामपि निरूढलक्षणाकेवललक्षणाभेदेन द्वैविध्यश्चाप्यभ्युपागामि ।

परममुख्यवृत्त्या सर्वेषां शब्दानां परब्रह्मवाचकत्वश्च सिद्धान्तितम् । अनन्यगोचरत्वात् नूत्नत्वाच्चास्य द्वैतवेदान्तगतस्य वृत्तिविचारस्य 'द्वैतवेदान्ते वृत्तिस्वरूपविचारः' इति शीर्षिकाया अधः समग्रस्यास्य विषयस्य निरूपणे प्रायतिषम् ।

मोक्षस्य वेदान्तजन्यज्ञानसाध्यत्वमङ्गीकुर्वद्भिर्दर्शनैः वेदवेदान्तानां ब्रह्मप्रतिपादकत्वमुपपादनीयम् । शुद्धब्रह्मणोऽवेद्यत्वं वदता अद्वैतदर्शनेन परब्रह्मणः शब्दवाच्यत्वं नाङ्गयकारि । 'सत्यं ज्ञानम्' इत्यादिषु ब्रह्म लक्ष्यं भवति न तु वाच्यमिति तन्मते ब्रह्मणि सर्वशब्दसमन्वयस्यावश्यकता नास्ति । ब्रह्मणो वाच्यत्वमूरीकुर्वाणाः रामानुजीयाः पुनः सर्वशब्दवाच्यत्वमभ्युपागमन् । ते च जगद्ब्रह्मणोः शरीरशरीरिभावमभ्युपयन्ति । शरीरवाचकानां पदानां शरीरिपर्यवसायित्वं वदतां तेषां मते सर्वशब्दवाच्यत्वं ब्रह्मणो विना क्लेशं निरूप्यते ।

परमात्मा सर्वगुणपरिपूर्ण इति द्वैतसिद्धान्ते तस्य गुणसर्वस्वसिद्धये मुख्यवृत्त्या सर्वशब्दवाच्यत्वं सिद्धान्तितम् । सर्वेषां शब्दानां मुख्योऽर्थः परब्रह्मैव । यद्येकः शब्दः परमात्मानं नाभिदध्यात् तदा तेनोच्यमानो

गुणः परमात्मनि न सिद्ध्येदिति सर्वगुणपूर्णत्वभङ्गः। गुणपूर्णत्वसिद्ध्यर्थं विष्णोः सर्वशब्दवाच्यत्वम्। लोके दोषबोधकत्वेन प्रतीयमानाः दुःखिबद्धावराद्याश्च शब्दाः परब्रह्मणि गुणवाचका एव ।

सर्वशब्दानां मुख्यवृत्त्या परब्रह्मवाचकत्वे काश्चनानुपपत्तयः पीडयन्ति। परमात्मन एव मुख्यवृत्त्या सर्वशब्दवाच्यत्वे भगवदवाचकस्य शब्दस्यैवाभावेन 'स्नाहि भुङ्क्ष्व' इत्याद्युच्चारितशब्दमात्रस्य भगवद्वाचित्वात् स्नानभोजनशयनादिलोकव्यवहार एव विलुप्येत । अमुख्यवृत्त्या लौकिकार्थस्याङ्गीकारे लोकव्यवहारमात्रस्य लाक्षणिकत्वं वा स्यादित्याक्षेपस्य कः प्रतीकारः ? कथञ्चेत्थम् अव्यक्तगच्छभुङ्क्ष्वेत्यादिशब्दानामन्यत्रैव प्रसिद्धानां भगवति समन्वयः? शब्दात् साक्षात्प्रतीयमानस्यार्थस्य लक्ष्यत्वमङ्गीकृत्य, अप्रतीयमानस्य ब्रह्मणो वाच्यत्वाङ्गीकारः कथं साधीयान्?

नैता अनुपपत्तयः द्वैतसिद्धान्तं स्पृशन्ति । अस्थाने निक्षिप्तोऽयं व्यवहारानुपपत्त्यादिप्रसङ्गः। सर्वशब्दानां भगवद्वाचिनामपि लोकप्रसिद्धार्थान्तरवाचकत्वस्यापि स्वीकारात् । परमात्मनि परममुख्यवृत्तिः, तदितरत्र मुख्यवृत्तिरिति रीत्या मुख्यवृत्त्यैव भगवदितरवाचकत्वात् न लोकव्यवहारस्य लाक्षणिकत्वप्रसङ्गोऽपि ।

ननु गच्छभुङ्क्ष्वाव्यक्तादिशब्दानामनेकार्थत्वे सति खलु लोकव्यवहारः भगवद्वाचित्वञ्चेति द्वयं घटेत। तदेव कुतः? कोशादिषु परमेश्वरपर्यायतया तेषामपाठादिति चेत्- उच्यते। गच्छभुङ्क्ष्वादिपदानां तत्तत्पदार्थवाचित्वं व्यवहारादिनिर्वाहार्थमवश्यमभ्युपेयम् । परमेश्वरवाचित्वं कुत इत्यत्रैव पश्नः पर्यवस्यति । तत्र तु 'नामानि सर्वाणि यमाविशन्ति', 'ता

वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्' इत्याद्युपदेशबलात् तत्तच्छब्दानां परमेश्वरवाचित्वमवश्यमभ्युपेयम् ।

न केवलं श्रुत्युपदेशबलादेवं, लिङ्गवाक्यप्रकरणसमाख्यादि-सामर्थ्याच्चेति ध्येयम् । 'शब्दादेव प्रमितः', 'आकाशस्तल्लिङ्गात्', 'अत्ता चराचरग्रहणात्', 'प्रकरणाच्च' इत्यत्र ब्रह्मसूत्रेषु क्रमेण श्रुति-लिङ्गप्रकरणेभ्यः शब्दानां परमेश्वरे समन्वयसाधनात् । तदेत्सर्वमभि-प्रेत्योक्तमनुव्याख्याने-

तेषु तेषु पदार्थेषु रूढिरङ्गीकृता यतः ।
प्रयोजनबहुत्वेन तस्य तस्याविरोधतः ।
उपदेशादिसामर्थ्यात् विष्णौ शक्तिश्च गृह्यते ।। इति ।

एवमेवेन्द्ररुद्रादिशब्दानां विष्णावेव परममुख्यत्वमपि निश्चीयते । इन्द्ररुद्रादिशब्दप्रवृत्तिनिमित्तानां परमैश्वर्यरोगवारकत्वादीनां विष्णावेवा-न्यानधीनत्वेन निरतिशयेन च विद्यमानत्वात् । अङ्गरूढेरभावेऽपि विद्वद्रूढेः (महारूढेः) विष्णावेव सत्त्वात् ।

वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णु सर्वत्र गीयते ।।

इत्याद्यभियुक्तोक्तेश्च ।

इन्द्रशब्दस्य योगस्तावत् पुरन्दरे विष्णौ च वर्तते । योगनिमित्तस्य परमैश्वर्यादेरुभयत्र सद्भावात् । रूढिश्चोभयत्र वर्तते । अभिधानादि-सिद्धत्वात् । न चेश्वरे इन्द्रादिशब्दरूढिरसिद्धेति वाच्यम् । विद्वद्रूढेरुप-

पादनेन समाधास्यमानत्वात्। इत्थञ्च रूढियोगयोरुभयत्र सत्त्वादुभयोरपि मुख्यार्थतायां नास्ति विवादः । किन्तु परमेश्वरविषययोः रूढि-योगयोरपराधीनत्वनिरङ्कुशत्वाभ्याम्, अन्यत्र पुरन्दरादौ तु तदधीनत्वा-ल्पत्वाभ्यां मुख्यार्थतायामेव मुख्यामुख्यविभागोऽभिधीयते । विष्णुः परममुख्यार्थः; पुरन्दरादिस्तु मुख्यार्थ इति । तदेवं मुख्यवृत्तिरेव परममुख्यवृत्तिर्मुख्यवृत्तिश्चेति द्विविधा । इत्थञ्चैवमपि वृत्तिविभागः सुकरः- वृत्तिर्द्विविधा। मुख्या अमुख्या चेति। मुख्या द्विविधा परम-मुख्या मुख्या चेति। अमुख्यापि द्विविधा गौणी लक्षणा चेतीति ।

नन्वथापि कथमिन्द्रादिशब्दानां विष्णौ रूढिः? कथं वा 'विश्वस्मा-दिन्द्र उत्तर' इत्यादौ इन्द्रशब्दस्योभयार्थत्वम्? विश्वस्मादुत्तरत्वरूप-सर्वोत्तमत्वस्योभयोरसम्भवात् । इत्येवमादीनाम् अनुयोगानां समर्थः परिहारोपायः प्रबन्धेऽस्मिन् प्रपञ्चितोऽस्ति ।

भगवतः सर्वशब्दवाच्यत्वसिद्धान्तपरिरक्षणार्थमेव च महायोग-रूढ्यादयः वृत्तेरवान्तरभेदा अपि सप्रमाणं समर्थिताः ।

**प्रकृतप्रबन्धानुसन्धानविषये-**

किञ्चिदिवैतद्विषये विवदिषोन्मिषति । परमपूज्यानामुडुपि-पेजावराधोक्षजमठाधीशानां श्रीविश्वेशतीर्थश्रीचरणानामन्तेवास्यहं करुणापूर्णहृदयैः पूज्यैः पाठितं न्यायसुधासहितानुव्याख्यानग्रन्थ-मधीयानः विस्मयावहेषु बहुषु विषयेष्वाकृष्टः समभवम् । तादृशेषु विषयेषु पदवृत्तिविषयोऽप्यन्यतमः । 'स्फुटत्वात् फडिति प्रोक्तः' इत्यादिना सर्वशब्दानां भगवति समन्वयं कुर्वतो द्वैतसिद्धान्तस्य

प्रतिष्ठायां परममुख्यवृत्त्यादिवृत्तिप्रभेदपरिकल्पनं मूलस्तम्भ इव प्रामुख्यं भजते । विनैनेन परिकल्पनेन पदर्शितानुपपत्तीनां न कथङ्कारमपि परिहारः शक्यसाध्यः । अतोऽस्मिन् विषय आकृष्टं मदीयं चेतः ।

तदानीमेव मद्भागधेयवशात् पूर्णप्रज्ञसंशोधनमन्दिरस्य गौरवनिदेशकाः मान्याः प्रा. डि. प्रह्लादाचार्याः तमिमं विषयमधिकृत्य विद्यावारिध्युपाध्यर्थं प्रबन्धमारचयितुमभ्यन्वजानन् । विद्वदग्रगण्यानां तेषां मार्गदर्शनेन प्रोत्साहेन च नानाग्रन्थावलोकनपूर्वकमयं प्रबन्धः महता यत्नेनानुसंहितोऽस्ति । अत्र प्रबन्धे प्रायशो ग्रन्थाधारेणैव विषयो निरूप्यमाणोऽपि क्वचिदयं प्रबन्धः स्वबुद्ध्युत्प्रेक्षितैश्शास्त्राविरुद्धविषयैरपि गर्भितोऽस्ति ।

**सप्तसु परिच्छेदेषु -**

तदेते विषयाः सप्तसु परिच्छेदेषु न्यरूपिषत ।

वर्ण-पद-वाक्यानां स्वरूपनिर्धारणपूर्वकं शब्दस्य प्रामाण्यव्यवस्थापनम्, शब्दस्यार्थावबोधने अपेक्षिताः सामग्र्यः, तत्र वृत्तिज्ञानस्योपयोगः, शब्दार्थयोः सम्बन्धरूपवृत्तेः स्वरूपनिर्धारणं, शब्दार्थयोः सम्बन्धोऽनुपपन्न इत्याक्षेपस्य समाधानपुरस्सरं श्रुतानुस्मृतसम्बन्धस्यैव शब्दस्य शाब्दप्रमाजनकत्वमित्येतज्जातीया विषयाः **प्रथमपरिच्छेदे** प्रत्यपादिषत ।

न्याय-मीमांसा-अद्वैतवेदान्त-वैयाकरणादिदर्शनेषु वृत्तिस्वरूपप्रभेदविषये दृश्यमाना विप्रतिपत्तिः द्वैतवेदान्तरीत्या वृत्तिप्रभेदाद्युपपादनोपोद्घातरूपेणात्र **द्वितीयपरिच्छेदे** न्यरूपि ।

**तृतीयपरिच्छेदे** तु तर्कताण्डवन्यायसुधादिग्रन्थप्रतिपादितदिशा द्वैतवेदान्ते वृत्तिप्रभेदप्रकारः व्यलेखि । दर्शनान्तरेष्वदृष्टस्य ऐदंप्राथम्येनाविष्कृतस्य परममुख्यवृत्त्यादिस्वीकारस्य विषये निमित्तपर्यालोचनं चाकारि । परब्रह्मणो मुख्यवृत्त्यैव सर्वशब्दवाच्यत्वम्, कर्मकाण्डगतानामपि वाक्यानां ब्रह्मवाचकत्वम्, शब्दप्रवृत्तौ तद्गतत्वापेक्षया स्वातन्त्र्यस्यैव मुख्यत्वम्, इन्द्रादिशब्दानां विष्णावेव मुख्यत्वम्, भगवतः सर्वशब्दवाच्यत्वे प्रमाणनिरूपणमित्येते विषया आनुषङ्गिकतयात्र परिच्छेदे व्यलेखिषत । परममुख्यवृत्तिप्रभेदा अपि निरूपिताः ।

मुख्यवृत्तिप्रभेदनिरूपणार्थमेव प्रवृत्ते **चतुर्थपरिच्छेदे** अभिधाया अवान्तरप्रभेदाः, योगस्वरूपश्च प्रतिपादितम् । एतद्विषये न्यायसुधातर्कताण्डवयोरापाततो दृश्यमानो विरोधश्च पर्यहारि ।

**पञ्चमपरिच्छेदे** पुनः 'योगरूढिरिति अभिधा भेद एव नास्ति, पङ्कजादिपदं पद्मे यौगिकमेव' इति प्राभाकरमतं सूक्ष्मेक्षिकया परिवीक्षितम् । वृत्तिद्वयसमाहाररूपस्य योगरूढेरङ्गीकारस्यावश्यकता, पङ्कजपदात् कुमुदबोधप्रकारश्चानुवर्णितः । मणिकारोक्तस्य योगरूढिसमर्थनक्रमस्यायुक्तताप्यत्रावसरप्राप्ता न्यरूपि ।

अमुख्यवृत्तिनिरूपणार्थं प्रवृत्ते **षष्ठपरिच्छेदे** लक्षणायाः स्वरूपं, लक्षणाबीजम्, तद्विषये मणिकारमतस्यायुक्तता, प्रयोजनस्य लक्षणाहेतुत्वाभावः, लक्षणागौण्योरभिधाव्यतिरिक्तत्वव्यवस्थापनम्, लाक्षणिकस्याप्यानुभावकत्वं, सादृश्यस्य सम्बन्धत्वनिराकरणपूर्वकं गौण्या लक्षणातो भेदप्रपञ्चनमित्येतेऽत्र निरूपिता विषयाः ।

अन्तिमे **सप्तमपरिच्छेदे** वृत्तीनां प्राबल्यदौर्बल्यचिन्तनपूर्वकमयं प्रबन्ध उपसंहृतः ।

डा. हेच्. सत्यनारायणाचार्यः

# अन्तरङ्गतरङ्गाः

# ‘‘द्वैतवेदान्ते पदवृत्तिस्वरूपविचारः’’

## १. प्रस्तावना

पार्वतीपरमेश्वरयोः वागर्थाविव सम्पृक्तिरुक्ता कविपुङ्गवेन कालिदासेन[१]। सम्पृक्तिश्चाविनाभावः। ‘वागर्थाविव सम्पृक्तौ’ इति वदतः उपमादानशौण्डस्य कवेरभिप्रेतः शब्दार्थयोरविनाभावश्च कीदृशः? न तावद्वह्निधूमयोरिव नियतसाहचर्यम्। न वा मिलितनीरक्षीरयोरिवाविभाज्यत्वम्। किं नाम, शब्दावाच्यस्यार्थस्याभावः, तथा अर्थावाचकस्य शब्दस्याभाव इति वाच्यवाचकभावसम्बन्धमुखेनैव शब्दार्थयोरविनाभावः कालिदासस्य अभिप्रेत इति नातिदूरं सहृदयचेतसाम्। अयमेव वाच्यवाचकभावाख्यः शब्दार्थसम्बन्धः ‘वृत्तिः’ इति व्यवह्रियते शास्त्रेषु।

वृत्तिः, व्यापारः, सम्बन्धः इति पर्यायाः। वर्तते, शब्दः अर्थे प्रवर्तते अनयेति वृत्तिः। ‘वृतु-वर्तने’ इति स्वादिगणपठितधातोः बाहुलकात् करणे क्तिन्।

तामेतां वृत्तिमधिकृत्य द्वैतवेदान्तप्रदर्शितपथेन अवसरप्राप्तमतान्तरविमर्शपूर्वकं निबन्धमेकमारचयितुं तदुपयोगित्वेनोपोद्धातरूपेणादौ किञ्चिदुच्यते।

---

१. ‘वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥’ - रघुवंशम्, स.१, श्लो.१

**१.१. प्रमाणलक्षणम् -**

प्रमितिः प्रमासाधनश्चेति द्वयं प्रमाणशब्दार्थः । भावव्युत्पत्त्या प्रमाणशब्दः प्रमितिवाची । 'प्रमीयतेऽनेनेति प्रमाणम्' इति करण-व्युत्पत्त्या तु सः प्रमासाधनवाची । किन्तु प्रमितितत्साधनोभय-साधारणप्रमाणस्य लक्षणं दर्शनेषु न दृश्यते । क्वचन प्रमाणशब्दस्य प्रमित्यर्थकत्वं स्वीकृत्य लक्षणं न्यगादि । प्रमाकरणार्थकत्वं स्वीकृत्य तु अन्यत्र । मीमांसकमते पश्यामः- जैमिनिसूत्रस्थप्रमाणशब्दस्य व्याख्यानं कुर्वन् शास्त्रदीपिकायाम्- 'करणदोषबाधकज्ञानरहितम् अगृहीतग्राहिज्ञानं प्रमाणम्' इति प्रमाणलक्षणं न्यरूपि । अनधिगतार्थ-गन्तृ प्रमाणमिति अध्वरमीमांसाकुतूहलवृत्तिकारेणाप्युक्तम् । अत्र प्रमितिरेव हि प्रमाणमित्युच्यते । किन्तु न्यायवैशेषिकदर्शनयोः प्रमासाधनं लक्ष्यते । तथा हि- वात्स्यायनभाष्ये 'उपलब्धिसाधनानि प्रमाणानि' इति वचनेन प्रमासाधनत्वं प्रमाणलक्षणमुक्तम् । वार्तिक-कारेणोपलब्धिहेतुः प्रमाणमिति न्यागादि । भासर्वज्ञेन सम्यगनुभवसाधनं प्रमाणमित्यभाणि । तर्कसङ्ग्रहेऽप्यन्नम्भट्टेन 'प्रमाकरणं प्रमाणम्' इति वदता प्रमाणशब्दस्य प्रमासाधनमात्रवाचकत्वं गृहीतम् । प्रमायास्तु 'तद्वति तत्प्रकारकोऽनुभवः' इति लक्षणान्तरमुक्तम् । द्वैतवेदान्ते तु 'टीकाकृत्पादाः' इति प्रथितनामानः श्रीमज्जयतीर्थपूज्यचरणाः 'यथार्थं प्रमाणम्' इत्याचार्यवचोऽभिप्रायमाविष्कुर्वन् प्रमातत्साधनोभयसाधारणं लक्षणमाहुः प्रमाणपद्धतौ- यथावस्थितज्ञेयविषयीकारित्वमिति[२] ।

---

२. ज्ञेयमनतिक्रम्य वर्तमानं, यथावस्थितमेव ज्ञेयं यद्विषयीकरोति नान्यथा, तत्प्रमाणमित्यर्थः । (प्र.प.- प्रत्यक्षपरिच्छेदः,पृ.सं. ३३)

विषयीकारित्वञ्च साक्षाद्वा, परम्परया वा[3] साक्षाज्ज्ञेयविषयीकारित्वं प्रमायाम् । साक्षाज्ज्ञेयविषयीकारिसाधनत्वेन तद्विषयीकारित्वं प्रमा-साधनेषु ।

अनुभूतिः प्रमाणम्, स्मृतिव्यतिरिक्तं ज्ञानमनुभूतिरिति प्राभाकराणां लक्षणम् । तदिदं संशयविपर्ययाव्यापकत्वात् स्मृतौ वेदादिषु च यथार्थज्ञानसाधनेषु अव्यापकत्वाच्च अयुक्तम् । ज्ञातताप्राकट्यापर-पर्यायवाच्यस्य प्रकाशविशेषस्य साधनं क्रियाज्ञानं प्रमाणमिति भाट्टानां लक्षणमप्ययुक्तम् । ज्ञानव्यतिरिक्तायां ज्ञाततायां प्रमाणाभावेना-सम्भवित्वात् । अतीतादिविषयज्ञानानामाश्रयाभावेन ज्ञातताजनकत्वा-योगाच्च । वेदादिष्वतीन्द्रियवेदकेष्वव्याप्तेश्च ।

अनधिगततथाभूतार्थज्ञानं प्रमाणमिति तेषामेव लक्षणान्तरमप्य-युक्तम् । स्मृतौ वेदादिषु चाव्याप्तेः । सम्यगनुभवसाधनं प्रमाणमिति नैयायिकादयः । यथार्थज्ञाने अव्याप्तेस्तदप्यसत् । प्रमाव्याप्तं प्रमाणमि-त्युदयनाचार्याः । तदपि सर्वस्यापि प्रमेयस्य ईश्वरप्रमाव्याप्तत्वेनाति-व्यापकत्वादयुक्तम् । तस्मात् याथार्थ्यमेव प्रमाणलक्षणं युक्तम् ।

याथार्थ्यञ्च यथावस्थितज्ञेयविषयीकारित्वम् । लक्षणन्त्विदं केवल-प्रमाणानुप्रमाणयोः वर्तते । ज्ञायमानं वस्तु यद्देशकालयोर्यादृशं तथैव विषयीकुरुतः प्रमा, तत्साधनञ्चेति लक्ष्यभूतयोः केवलप्रमाणानु-प्रमाणयोः यथावस्थितार्थविषयीकारित्वात् लक्षणसङ्गमनं ध्येयम् ।

---

३. ज्ञेयविषयीकारित्वञ्च साक्षाद्वा साक्षाज्ज्ञेयविषयीकारिसाधनत्वेन वा विव-क्षितम् । (प्र.प.- प्रत्यक्षपरिच्छेदः, पृ.सं. ३३)

ननु धूलीप्रक्षेपः केवलं क्रियते चक्षुषोः । यतो हि विषयीकारित्वं ज्ञानधर्मः । अतः यथावस्थितज्ञेयविषयीकारित्वरूपं लक्षणं प्रमारूप-केवलप्रमाणे सङ्गतश्चेदपि न कथङ्कारमपि ज्ञानसाधनीभूते त्रिविधानु-प्रमाणे इत्यव्याप्तिरिति चेत्- मैवम् । ज्ञानं यथा अन्याव्यवधानेन साक्षादर्थविषयकं तथा तत्साधनानीन्द्रियलिङ्गशब्दरूपानुप्रमाणान्यपि अन्याव्यवधानेन साक्षादेवार्थविषयकाणि[४] । न हि तानि किमप्य-विषयीकृत्य ज्ञानं जनयितुमीशते । अतिप्रसङ्गात् । कथमन्यथा चक्षुषो गन्धज्ञानाजनकत्वम् । अतो गन्धविषयकमेव करणं गन्धज्ञानं जनयती-त्यवश्यं वक्तव्यम् ।

ननु करणस्य सविषयकत्वमेव कथमिति चेत्- यत्सन्निकृष्टकरणेन यज्ज्ञानमुत्पद्यते स तस्य विषय इति विषयत्वनिर्वचनात् । घटसन्निकृष्टेन निर्दुष्टचक्षुरिन्द्रियेण घटज्ञानमुत्पद्यते चेत् घटज्ञानस्य यथा घटो विषयः, तथा निर्दुष्टार्थसन्निकृष्टेन्द्रियरूपप्रत्यक्षस्यापि (चक्षुरिन्द्रिय-स्यापि) घटविषयकत्वमङ्गीकार्यम् । करणानि यत्सन्निकृष्टानि ज्ञानं जनयन्ति तस्यैव ज्ञानविषयस्य करणानि प्रत्यपि विषयत्वात् । अत्र च सन्निकर्षपदेन प्रत्यासत्तिमात्रस्य विवक्षितत्वात् इन्द्रियाणामर्थैः संयोग इव लिङ्गशब्दयोरपि लिङ्गिवाक्यार्थाभ्यां व्याप्तिवृत्तिरूपप्रत्त्या-सत्त्या लिङ्गिवाक्यार्थधीजनकत्वेन तत्रापि करणस्य सविषयकत्वोप-पत्तिः । एवञ्च ज्ञानरूपकेवलप्रमाणे, ज्ञानसाधनीभूते प्रत्यक्षाद्यनुप्रमाणे च यथावस्थितज्ञेयविषयीकारित्वमेकरूपमेव । परन्त्वर्थे यज्ज्ञेयत्वं तज्ज्ञानोपाधिकमेव न करणोपाधिकम् । अतो ज्ञेयविषयीकारीत्यत्र

४. प्र.प.- रा.टि., पृ. ४०

ज्ञेयत्वांशेऽनन्यापेक्षत्वान्यापेक्षत्वरूपभेदमात्रेण ज्ञाने साक्षाज्ज्ञेय-विषयीकारित्वव्यवहारः, करणे तु तत्साधनत्वव्यवहारः इति न कश्चिद्दोषः ।

यद्यप्यन्यत्र 'साक्षाद्यथावस्थितार्थविषयीकारि केवलम् । परम्परया तादृशमनुप्रमाणम्'[५] इति टीकामाटीकद्भिः टीकाकृत्पादैरेव परस्परानानु-गतलक्षणेन केवलप्रमाणानुप्रमाणे निरुक्ते इत्यापाततो भासते । किन्त्वत्रैवं समाधातव्यम्- केवलप्रमाण इवानुप्रमाणेऽपि साक्षादेव ज्ञेयविषयीकारित्वमस्ति । ज्ञानस्येव तत्करणानामपि सविषयकत्वे-नोभयत्राप्येकरूपविषयीकारिताया उपपादितत्वात् । परन्तु ज्ञानं तावत् विषयस्य ज्ञेयतामुपाधितया सम्पादयति, करणानि तु तादृशोपाधिजनकतया सम्पादयन्तीति ज्ञेयत्वसम्पादनमात्रे साक्षात्त्वं पारम्पर्यञ्च विवक्षितम् । एतदभिप्रायेणैव जयतीर्थपूज्यचरणाः प्रमाणपद्धतिग्रन्थे- 'ज्ञेयविषयीकारित्वञ्च साक्षाद्वा साक्षाज्ज्ञेयविषयी-कारिसाधनत्वेन वा विवक्षितम्'[६] इति निविविशुः ।

किञ्च स्यादयं लक्षणस्याननुगमदोषः यदि लक्षणशरीरे साक्षात्त्वं, साधनत्वं वा प्रविष्टं स्यात् । न चैवम् । यथावस्थितार्थविषयीकारित्व-स्यैव लक्षणत्वात् । अस्य च केवलप्रमाणानुप्रमाणयोरुभयोरपि अनु-गतत्वात् । ननु यदि यथावस्थितज्ञेयविषयीकारित्वं ज्ञाने, करणे च समानं, तर्हि कथं तयोः केवलप्रमाणानुप्रमाणेति विभिन्नपदवाच्यत्वम्? इति चेत्- इत्थम् । यथावस्थितज्ञेयविषयीकारित्वमित्यस्य स्वोपाधि-

५. प्र.ल.टी.- पृ. १० (दशप्रकरण १ भागे) ६. प्र.प.- पृ. ३९८

निमित्ताभ्यां यज्ज्ञेयं तद्विषयीकारित्वमित्यर्थः । तत्रार्थस्य ज्ञेयत्वे उपाधिः ज्ञानम् । निमित्तन्तु करणम् । तत्रोपाधितया ज्ञेयविषयीकारि ज्ञानम् । निमित्तत्वेन तु करणम् । ज्ञानस्योपाधित्वेन केवलपदप्रयोगः । करणस्य निमित्तत्वेनानुप्रमाणशब्दवाच्यता । न तु साक्षाद्ज्ञेयविषयीकारिताऽभावात् । तावन्मात्रेण चामुख्यत्वम् । उक्तञ्चानुव्याख्याने श्रीमन्मध्वाचार्यैः- "ज्ञानार्थे ज्ञेयता मुख्या शब्दार्थे तदनन्तरम्"[७] इति । अत्र शब्देति वेदमेवाकलयति भगवान् भाष्यकारः । तथा च यतो ज्ञानार्थे= ज्ञानविषये ज्ञेयता मुख्या; शब्दार्थे= वेदादिकरणविषये; तदनन्तरम्= ज्ञेयता अमुख्या; ततो ज्ञाने एव याथार्थ्यलक्षणं प्रामाण्यं मुख्यं, शब्दादिषु त्वमुख्यमिति मूलग्रन्थस्याभिप्रायः । यदि चैतावताऽव्याप्तिदोषः तर्हि सर्वत्रापि लक्षणेषु यत्किञ्चिद्वैलक्षण्यस्य सुवचत्वेन लक्षणमात्रोच्छेदप्रसङ्गः । अस्ति हि सास्नादावपि श्वेतनीलादिना, सौक्ष्म्यदैर्घ्यादिना वा यत्किञ्चिद्वैलक्षण्यम् । तदुक्तं श्रीमन्न्यासुधायाम्-'यथावस्थितार्थविषयत्वस्योभयत्र साम्यात् । ज्ञानविषय एव हि करणानां विषयः । न हि किमप्यविषयीकुर्वन्त्येतानि तज्ज्ञानं जनयन्ति । नाप्यन्यविषयाणि । अतिप्रसङ्गात् । केवलं विषयस्य ज्ञेयतां ज्ञानमुपाधितया, करणानि तु तज्जनकतया सम्पादयन्तीति एतावन्तं विशेषमाश्रित्य केवलानुप्रमाणभेदः समर्थितः । यदि चैतावताप्यव्याप्तिदोषस्तदा सर्वत्रापि यत्किञ्चिद्वैलक्षण्यस्य वक्तुं शक्यत्वादतिप्रसङ्गः स्यात्' इति ।

नन्वत्र प्रमाणशब्दोऽनेकार्थः । न हि गवादिशब्दार्थाः यावन्तस्तावत्सु

---

७. अ.व्या. - श्लो. २२, पृ.सं. ६०

अनुगतं लक्षणं परीक्षकैरुच्यते । अन्यथा सास्नादिमत्त्वस्य भूमिवेदादिष्वभावेनाव्याप्तिः प्रसज्येत । तथा च गवादिवदनेकार्थस्य प्रमाणस्य ज्ञानकरणोभयानुगतलक्षणकरणप्रयासो व्यर्थ एवेति चेत्- अत्रोच्यते- अनेकार्थकशब्दवाच्यानां नैकलक्षणमुच्यत इति यत् तदवितथमेव। प्रमाणशब्दस्तु नात्यन्तमनेकार्थः। तद्वाच्ययोर्भावकरणयोरनेकत्वेऽपि तदुभयत्रैकमाङ्धात्वर्थानुगमेन एकत्वस्यापि सम्भवेनैकार्थत्वात्। न हि गोशब्दवाच्येषु भूमिवेदजलादिषु एकधात्वर्थानुगमोऽस्ति । येन तेऽप्येकार्थाः स्युः[८] । तथा च युक्तैवात्रानुगतलक्षणोक्तिरित्यलम्। यद्यप्यत्र विचिकित्सते मनस्तथापि विस्तरभिया विरम्यते ।

## १.२. प्रमाणविभागः-

तदिदं प्रमाणं द्विविधमिति द्वैतसम्प्रदायः। केवलप्रमाणम्, अनुप्रमाणं चेति। यथार्थज्ञानं केवलप्रमाणम्। इदञ्च साक्षाज्ज्ञेयविषयीकारित्वात् केवलमित्युच्यते । यथार्थज्ञानसाधनमनुप्रमाणम् । जन्यज्ञानप्रामाण्यमनुसृत्य खलु जनकस्य (साधनस्य) प्रामाण्यं निर्णीयते । अत इदमनुप्रमाणशब्दव्यपदेश्यम् ।

तत्र केवलप्रमाणमपि द्विविधम् । चैतन्यं मनोवृत्तिरूपञ्चेति । चैतन्यस्यैव स्वरूपज्ञानमित्यपरं नाम । ईश्वरज्ञानं लक्ष्मीज्ञानञ्च स्वरूपमेव । योगिज्ञानायोगिज्ञानयोस्तु द्विरूपताङ्गीक्रियते । तत्राद्यं चैतन्यज्ञानं त्रिविधम्। उत्तममध्यमाधमभेदात् । तत्रोत्तमं यथार्थमेव ।

---

८. प्र.प.- वे.टि. पृ.सं. १२२

मध्यमं मिश्रम् । अधममयथार्थमेव । द्वितीयं वृत्तिज्ञानमपि प्रत्यक्षजन्यं (साक्षात्कारः), अनुमानजन्यम् (अनुमितिः), आगमजन्यं (शाब्द-बोधः) इति त्रिविधम् । अनुप्रमाणमपि त्रिविधम् । प्रत्यक्षमनुमानमागम-श्चेति । तत्र निर्दुष्टार्थसन्निकृष्टनिर्दुष्टेन्द्रियं निर्दुष्टार्थेन्द्रियसन्निकर्षो वा प्रत्यक्षम् । निर्दोषोपपत्तिरनुमानम् । निर्दोषः शब्द अदुष्टवाक्यं वाऽऽ-गमः[९]। आगमश्च द्विविधः । नित्योऽनित्यश्च[१०] । नित्योऽपौरुषेयः। अनित्यः पौरुषेयः । नित्यस्तु पुरुषनिबन्धनदोषाभावात्प्रमाणमेव ।

## १.३. शब्दस्य प्रामाण्यम्-

लोकः सर्वोऽपि सामान्यतः शब्देनैवाधिगतहेयोपादेयविवेकः जहाति जिहासितमुपादत्ते चोपादित्सितमिति सार्वजनीनमेतत् । किं बहुना, शब्दाभावे न धर्माधर्मव्यवस्था, नापि गुरुशिष्योपदेशसम्प्रदायः, न चापि लोकव्यवहार इति सर्वोऽप्ययं जीवलोकः अन्ध इव प्रशमित-निखिललोकव्यापारोऽसत्कल्पतामापद्येत । उक्तं च काव्यादर्शे-

'इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥'[११]

इति । स चायं जगज्ज्योतिरूपः शब्दः प्रत्यक्षादिषु बोधौपयिकेषु प्रमाणेषु अन्यतमत्वेनाभिषिक्तः ।

---

९. प्र.प., पृ.सं. ३७४

१०. आगमो द्विविधो ज्ञेयो नित्योऽनित्यस्तथैव च। (श्री.वि.त.नि., पृ.सं. ४१७)

११.काव्यादर्शः १-४

मनुरप्याह-

'प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता ।।'[१२]

इति । अत्र शास्त्रपदोपात्तं शब्दप्रमाणमेव ।

तदिदमागमापराभिधेयं शास्त्रमप्रमाणमित्याहुः प्रत्यक्षैकप्रमाणिनः चार्वाकाः । प्रत्यक्षानुमानयोर्द्वयोरेव प्रामाण्यमूरीकुर्वन् बौद्धोपि तत्पक्षे प्रविष्टः ।

वैशेषिकाः पुनः शब्दमनुमान एवान्तर्भावयन्ति । परन्त्वेतेषु सर्वेषु पक्षेषु शाब्दयामीति अनुव्यवसायानुपपत्तिः समानो दोषः । व्याप्त्याद्यननुसन्धान एव वाक्यार्थप्रतीतेरनुभवाच्च न वैशेषिकपक्षो न्याय्यः। साक्षात्करोमि, अनुमिनोमि, उपमिनोमि, शाब्दयामीति अनुव्यवसायान्यथानुपपत्त्या प्रत्यक्ष-अनुमान-उपमान-शब्दाश्चेति चत्वारि प्रमाणानि नैयायिकैरभ्युपगतानि । नन्वर्थापत्ति-अनुपलब्धि-ऐतिह्यादीनां प्रयाणान्तराणां सत्त्वेन कथं चत्वार्येव प्रमाणानीत्युच्यते इति चेत्-मैवम् । अर्थापत्त्यनुपलब्ध्योः अनुमाने, ऐतिह्यस्य च शब्देऽन्तर्भावात् । अतो न तेषां पृथक्प्रमाणत्वमिति प्रतिपादितं न्यायदर्शने[१३] ।

अत्र न्यायसिद्धान्ते वाक्यं द्विविधम् । वैदिकं लौकिकञ्चेति । वैदिकमीश्वरोक्तत्वात्सर्वमेव प्रमाणम् । लौकिकन्तु आप्तोक्तं प्रमाणम् ।

---

१२. म.स्मृ १२-१०४

१३. शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः । (न्या.द. २.१.१.) ।

अन्यदप्रमाणम्[१४] । आकाङ्क्षादिरहितश्च वाक्यमप्रमाणम् । यथा- गौरश्वः पुरुषो हस्तीति वाक्यस्या-प्रामाण्यमाकाङ्क्षाविरहात् । वह्निना सिञ्चतीत्यस्य तु योग्यताविरहात् । प्रहरे प्रहरेऽसहोच्चरितानां गामानयेत्यादिपदानां सान्निध्याभावादप्रामाण्यम् । अकाङ्क्षादिः वाक्यार्थज्ञाने हेतुः । आकाङ्क्षादिमदाप्तोक्तं वाक्यं प्रमाणमिति न्यायसिद्धान्तः ।

मीमांसकेषु भाट्टास्तावत् षट्प्रमाणवादिनः । तैरभ्युपगतानि प्रमाणानि च- प्रत्यक्ष-अनुमान-शास्त्र-उपमान-अर्थापत्ति-अनुपलब्ध्याख्यानि षट् । तत्र नैयायिकैरिव प्रत्यक्ष-अनुमिति-शाब्दबोध-उपमितिरूप-यथार्थानुभवानां सर्वजनीनतया लोकेऽनुभूयमानत्वेन तत्करणत्वेन प्रत्यक्षादीनि चत्वारि प्रमाणानि भाट्टैरप्यङ्गीकृतानि । किन्तु जीवतो देवदत्तस्य गृहेऽभावः बहिर्भावं गमयतीति रीत्या प्रमाजनिका अर्थापत्तिः पूर्वोक्तप्रमाणचतुष्के नान्तर्भवितुमर्हतीति पृथक् प्रमाणतया अङ्गी-कृता ।

नैयायिकमते तु व्यतिरेकव्याप्तेरङ्गीकृतत्वात् अर्थापत्तेरनुमानेऽन्तर्भावः सुकरः । मीमांसकैरपि 'तेन विना तदनुपपन्नत्वं नाम तदभावव्यापकी-भूताभावप्रतियोगित्वमिति ब्रूमः'[१५] इत्युक्तम् । इयमेव हि व्यतिरेक-व्याप्तिः । किन्तु मीमांसकैः केवलव्यतिरेकिलिङ्गं नाङ्गीकृतमतः 'पीनो देवदत्तः दिवा न भुङ्क्ते' इत्यादावन्वयव्याप्त्यभावात् नानुमानेऽन्तर्भाव-सम्भव इत्यर्थापत्तेः पृथक् प्रमाणत्वं स्वीकृतम्[१६] ।

---

१४. त.सं. शब्दखण्डे पृ.सं. ६७ १५. वे.प., पृ.सं. २७५

१६. See Battacharya B.K. 'The Anomaly of Vyathireki Inference'.

इमानि च पञ्चापि प्रमाणानि भावमात्रगोचराणि । नैतानि प्रभवन्ति अभावमुपसङ्ग्रहीतुम् । अतोऽभावसङ्ग्रहार्थमनुपलब्ध्याख्यं प्रमाणान्तरमङ्गीकार्यमिति वदन्तो भाट्टाः षट्प्रमाणवादस्यास्य वाल्मीकिवचनं उपष्टम्भकमिति च प्रतिपादयन्ति[१७] ।

प्राभाकरमते तु प्रत्यक्षानुमानशास्त्रोपमानार्थापत्त्याख्यानि पञ्चैव प्रमाणानि । अभावस्याधिकरणात्मकत्वेन अभावाख्यानुपलब्धेः प्रत्येकप्रमाणत्वायोगात् ।

इदमत्र समाहितैः चिन्त्यमस्माभिः । नैयायिकैः 'शब्द' इति पदेन चतुर्थप्रमाणत्वेनाङ्गीकृतं प्रमाणं मीमांसकैः शास्त्रमिति पदेन तृतीयप्रमाणत्वेनाभिषिक्तम् । शाबरभाष्यादारभ्य स एव सम्प्रदायः तैः परिपाल्यते ।

इदञ्च शास्त्रं भाट्टमतानुरोधेन पौरुषेयापौरुषेयभेदेन द्विधा विभक्तमप्यनाप्तप्रणीतत्वरूपदोषविरहादुभयमपि प्रमाणमेव । प्राभाकराणां तु मते वैदिकः शब्द एव शास्त्रमित्याख्यायते, न लौकिकः । लौकिकः शब्दः अत्र मते न प्रमाणं भवितुमर्हति । स्वयं तस्य निश्चयोत्पादनाक्षमत्वात् । लौकिकवचनानामसत्यभूयिष्ठत्वात् अर्थव्यभिचारस्य च शङ्क्यमानत्वाच्च । अतः लौकिकवचनानामन्विताभिधानसामर्थ्ये सत्यपि अनन्वितार्थत्वशङ्कया नान्वयनिश्चय इति नास्ति तेषां प्रामाण्यम् । ननु तर्हि लोकव्यवहारः कथमिति चेत्- संशयेनैव । अर्थसंशये सत्यपि लोकप्रवृत्तिर्दृष्टा । प्रवर्तन्ते हि जनाः वृष्टौ

१७. राम । षड्युक्तयो लोके याभिः सर्वोऽनुदृश्यते । (श्री.रा. - ३-७२-८)

सन्दिग्धायामपि तदायत्तफले कृष्यादिके कर्मणि । अतो लौकिकं वचनं न शास्त्राख्यं शब्दप्रमाणम्[१८] । अपौरुषेय एव शब्दः प्रमाणम् । तदेव शास्त्रशब्दव्यपदेश्यम् । अत एव वैशेषिकैः वेदानामपि पौरुषेयत्वं मन्यमानैः शब्दस्यानुमानात्पृथक् प्रामाण्यं नाङ्गीकृतमिति ध्येयम् ।

प्राभाकरमते शास्त्रं द्विविधम् । प्रत्यक्षमनुमानञ्च । प्रत्यक्षशास्त्रं नामाध्ययनपरिगृहीतः स्वाध्यायात्मको वेदराशिः । अनुमानशास्त्रं तु स्मृतिशिष्टाचारादिभिर्नित्यानुमेयम् । यथा- ग्रन्थप्रारम्भे मङ्गलाचरण-रूपशिष्टाचारेण ''समाप्तिकामो मङ्गलमाचरेत्'' इति मूलश्रुतेरनु-मानम् । यथा वा 'अष्टका कर्तव्या' इत्यादिस्मृत्या मूलशास्त्रानु-मानम्[१९] । उभयमपि शास्त्रमसन्निकृष्टार्थविषयं प्रमाणमेवेति प्राभाकर-मतम् ।

'व्यवहारे भट्टनयः' इत्यङ्गीकुर्वाणा अद्वैतवेदान्तिनोऽपि पौरुषेय-मपौरुषेयञ्चेति उभयमपि शास्त्रमनाप्तप्रणीतं प्रमाणमित्यूरीकुर्वन्ति ।

शब्दब्रह्मवादिनः पाणिनीया अपि शब्दं प्रमाणपदेऽभिषिञ्चन्ति । शब्दब्रह्माभिधेयः स्फोट एव परमार्थः । तदन्यन्नामरूपात्मकं तु सर्वं जगदसत्यम् (मिथ्या) इति हि तत्सिद्धान्तः । वैयाकरणभूषण, तत्सार, कौस्तुभ, मञ्जूषादिनिबन्धेषु तथैवोक्तत्वात् । एवञ्चैतद्दर्शने

---

१८. प्र.प., २४-२-२४४।

१९. तत्र लौकिकं वाक्यं लिङ्गतया प्रत्यायकम् । तत्तु न शास्त्रम् । असन्निकृष्टविषयत्वाभावात् । वैदिकमेव शास्त्रमिति सिद्धम् । तत्तु द्विविधम् । प्रत्यक्षमनुमानञ्च । तत्राद्यमध्ययनपरिगृहीतस्वाध्यायात्मको वेदराशिः । द्वितीयस्तु नित्यानुमेयः । तत्र लिङ्गं स्मृतिराचारश्च । (तं.र., ३९)

पाणिनिर्यदकरोत् महता शास्त्रेण शब्दव्युत्पादनं तत्सर्वं ब्रह्मातिरिक्तत्वात् अवास्तवम् । एतच्च वास्तवस्य ब्रह्माभिधेयस्य स्फोटस्य प्रतिपत्तये उपायो भवति । 'असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते' इत्यसत्यस्य सत्यवस्तुप्राप्त्युपायत्वोक्तेः[२०]। इत्यादि प्रतिपादयत् पाणिनीयदर्शनं स्वोक्तस्य निखिलप्रमेयस्य प्रमाणत्वेन श्रुतिं निर्दिशति । धर्मनिर्णये तर्कापेक्षया आगमस्य प्राबल्यम् आर्षज्ञानस्यागमपूर्वकत्वञ्चोपपादितं भर्तृहरिणा[२१] । आप्तोपदेशस्यापि अनुमानाद्यबाध्यत्वं प्रतिपादयता भर्तृहरिणा आगमस्य सर्वोत्तमप्रामाण्यं, तदनुसारिणामेव चानुमानादीनां प्रामाण्यं निरणायि[२२] ।

विशिष्टाद्वैतसिद्धान्तेऽपि यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमा[२३] । तत्साधनं प्रमाणम् । तच्च त्रिविधम्- प्रत्यक्षानुमानशब्दभेदात्[२४] । साक्षात्कारिप्रमा प्रत्यक्षम् । व्याप्यस्य व्याप्यत्वानुसन्धानाद्व्यापकविशेषप्रमितिरनुमानम् । अनाप्तानुक्तशब्दजनितं तदर्थविज्ञानं शाब्दमिति वेदान्तदेशिकाचार्यैः न्यायपरिशुद्धौ न्यगादि ।

२०. व्यासपाणिनिभावनिर्णयः पृ.सं. २

२१. न चागमादृते धर्मस्तर्केण व्यवतिष्ठते ।
ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम् ॥ - वाक्यपदीयम्, श्लो.३०, पृ.७०

२२. वाक्यपदीयम्, श्लो. ३१

२३. तत्रास्मदीया एव केचिदन्यथाख्यातिमिच्छन्तः, स्मृतेः प्रामाण्यमनिच्छन्तः, सम्यगनुभवः प्रमेति लक्षयन्ति; उभयमिच्छन्तः, यथार्थज्ञानं प्रमेति; उभयमनिच्छन्तः अनुभूतिः प्रमेति । एवं प्रायाणि वाद्यन्तरोक्तानि लक्षणानि । वयन्तु ब्रूमः - यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमेति । (न्यायपरिशुद्धिः - पृ.सं. १०)

२४. त्रिविधं प्रमाणम् - प्रत्यक्षानुमानशब्दभेदात् । (न्या.प., पृ.सं. ९४)

तदेवं प्रमाणपदवीमारूढः शब्दः पौरुषेयापौरुषेयभेदेन द्विविधः । प्रामाण्यं गुणजन्यमित्यङ्गीकुर्वाणाः नैयायिकास्त्वपौरुषेयं वाक्यमेव नाङ्गीकुर्वन्ति । तच्चानवसरग्रस्तत्वात् नात्रोपक्षिप्यते । प्राभाकरास्तु अपौरुषेयस्य पृथक् प्रमाणत्वेऽपि पौरुषेयस्य न पृथक् प्रामाण्यम्, पुरुषवचसां प्रायेणानृतभूयिष्ठत्वेन अनन्वितार्थत्वशङ्कया अन्वय-निश्चयाभावादित्याहुः । अत्र वक्तव्यम्- वेदेऽपि शब्दोत्थापितस्यार्थस्य व्यभिचारेण अनन्वितार्थत्वशङ्का भवति न वा? न भवतीति न वक्तव्यमनुभवे बहुमानवता । पुत्रेष्टिशतकर्तुरपि पुत्रलाभादर्शनेन 'पुत्रकामः पुत्रेष्ट्या यजेत' इत्यादौ संशयजननात् । जातापि शङ्का वेदस्यापौरुषेयतया निवर्तत इति चेत्तद्वदत्रापि । आप्तोक्तत्वादिना शङ्कानिवृत्तिर्भविष्यति । तथा च वेदादेवान्वयनिश्चयः, अप्रामाण्य-शङ्कानिवृत्तिमात्रमुपायान्तरेणेति लोकवेदयोः समानमेवेति लौकिकवाक्य-स्यापि वेदवत् स्वातन्त्र्येणैव प्रमाण्यमिति सिद्धान्तः ।

स च शब्दो निर्दुष्ट एव प्रमाणम्[२५] । शब्ददोषाश्चाबोधकत्वविप-रीतबोधकत्वादयः । अबोधकत्वं हि निरभिधेयत्वेनान्वयाभावेन वा भवति । खछठथफादीनां निरभिधेयत्वेनैवाबोधकत्वम्, 'कुण्डमजाजिनं दशदाडिमानि षडपूपाः' इत्यादावन्वयाभावेन, अयमेति पुत्रो राज्ञः पुरुषोपसार्यतामित्यादावाकाङ्क्षाभावेन, विलम्बेनोच्चरिते गामानयेत्यादौ तु आसत्त्यभावेन चाबोधकत्वमेव दोषः । स्फीतालोकमध्यवर्तिघट-प्रतिपादकवाक्यस्य पुनरुक्तस्य वा ज्ञातज्ञापकत्वं दोषः । 'सर्वं शून्यम्' इत्यादिप्रतिवादिवाक्ये वक्तुरनाप्तत्वादिना विपरीतबोधकत्वं

२५. 'निर्दोषः शब्दः आगमः' (प्र.प., पृ.सं. ३७४)

दोषः । काकदन्तविचारवाक्यस्याप्रयोजनत्वं दोषः । विरक्तं प्रति वाणिज्योपदेशवाक्यस्य अनभिमतप्रयोजनत्वं दोषः । रोगार्तं प्रति हिममहीधरोत्तरसानुवर्तिमृत-सञ्जीविनीकथनवाक्यस्याशक्यसाधन-प्रतिपादनत्वं दोषः । तृषितं प्रति गीर्वाणतरङ्गिणीसमीपे कूपखननोप-देशकवाक्यस्य लघूपाये सति गुरूपायोपदेशनं दोषः । प्रतारकवाक्ये तु प्रतारकत्वमेव दोषः । एवञ्चाबोधकत्वम्, विपरीतबोधकत्वम्, ज्ञातज्ञापकत्वम्, अप्रयोजनत्वम्, अनभिमतप्रयोजनत्वम्, अशक्यसाधन-प्रतिपादनत्वम्, लघूपाये सति गुरूपायोपदेशनम्, प्रतारकत्वमित्यादयः शब्ददोषाः । दोषरहितः शब्द एवागमः । अत्राबोधकत्वं विपरीत-बोधकत्वञ्चेति दोषद्वयं प्रामाण्यस्य विघातकम् । ज्ञातज्ञापकत्वादिकन्तु आगमस्य विघातकम्, न प्रामाण्यस्य । अत एव 'स्मृत्यनुवाद-योर्नाप्रामाण्यम्, यथार्थानुभवत्वात्'[२६] इति ज्ञातज्ञापकयोरपि स्मृत्यनुवादयोः प्रामाण्यबोधकं श्रीमदाचार्यवचनमुपपद्यते ।

## १.४. वर्णानामर्थाभिधायकत्वम् -

ननु निर्दोषः शब्दः आगमाख्यं प्रमाणमित्युदितम् । प्रमाजनकं खलु प्रमा-णम् । प्रमाजनकत्वमेव शब्दस्य दुर्वचम् । तथा हि- वर्णाः खलु नित्याः सर्वगताश्चेति द्वैतसिद्धान्तः । न च तर्हि तेषां सर्वदोपलब्धिप्रसङ्गः । उच्चारणजन्यध्वनीनां वर्ण-व्यञ्जकत्वाङ्गीकारेण व्यञ्जकसत्वासत्वाभ्यां उपलब्ध्यनुपलब्धिव्यवस्थोपपत्तेः । यदि वर्णाः नित्याः सर्वगताश्च तर्हि तेषामर्थाभिधायकत्वमेव न घटते । न हि वर्णाः प्रत्येकमर्थमभिदधति । अनेकवर्णोच्चारणवैयर्थ्यापत्तेः । नापि

२६. प्र.ल. (पृ.सं. १३४)

समुदिताः । नित्यानां तेषां सर्वदा समुदितत्वेनोच्चारणाभावेऽप्यर्थाभिधानप्रसङ्गात् । ननु प्रतीतानामेव वर्णानामर्थाभिधायकत्वमुच्चारणाभावे च न तेषां प्रतीतिरतो नातिप्रसङ्ग इति चेत्- न । प्रतीतीनामाशुतरविनाशित्वेन समुदायायोगात् । तथा च कथमागमस्यार्थाभिधायकत्वमिति चेत्- उच्यते । एकबुद्ध्युपारूढानां वर्णानामर्थाभिधायकत्वोपपत्तेः । तथा हि- 'कलश' इत्युच्चरिते सति प्रत्येकं तावद्वर्णविषयकानुभवाः क्रमेण जायन्ते । ते च संस्कारमुत्पाद्य नश्यन्ति । 'कलशः' इत्यत्रान्त्येन विसर्जनीयेन सन्निकृष्टं श्रोत्रं पूर्वपूर्ववर्णानुभवजनितसंस्काररूपसहकारिबलेन ककारादिविसर्जनीयान्तसर्ववर्णविषयकमेकमनुभवं जनयति । तथा च पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतान्त्यवर्णविषयकश्रोत्रजनितानेकवर्णविषयकैकानुभवारूढत्वेन वर्णानामर्थाभिधायकत्वमुपपद्यते[२७] । यद्वा पूर्वपूर्वसंस्कारसहितोत्तरोत्तरानुभवाहितपटुतरसंस्कारजन्यनिखिलवर्णविषयकैकस्मृत्युपारूढत्वेन वर्णानामर्थाभिधायकत्वोपपत्तिः । तथा चोक्तं सुधायाम्- 'एकस्मृतिसमारूढानामेककार्यप्रत्यायकत्वेनोपपत्तेः'[२८] इति ।

ननु क्रमरहितानां वर्णानामर्थप्रत्यायकत्वे राजा जारेत्यादावर्थभेदप्रतीतिर्निर्निबन्धना स्यादतः क्रमवतामेव वर्णानामर्थप्रत्यायकत्वं वाच्यम् । न च वर्णेषु क्रमः सम्भवति । स हि दैशिकः कालिको वा वक्तव्यः । किन्तु वर्णानां नित्यत्वेन कालिकः, सर्वगतत्वेन दैशिकश्च क्रमः न सम्भवति ।

---

२७. पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतमन्त्यवर्णसन्निकृष्टं श्रोत्रमनेकेष्वपि वर्णेष्वेकां पदबुद्धिं जनयति । (प्र.प., पृ.सं. ३९३)

२८. न्या.सु. जिज्ञासाधिकरणम् ।

ननु वर्णानुभवः क्रमशः जायते। अतः दैशिककालिकक्रमासम्भवेऽपि वर्णविषयकानुभवनिष्ठः तन्निरूपितः कश्चन क्रमः वर्णेष्वस्तीति चेत्- न। अनेकवर्णानुभवजनितसंस्कारसचिवेन मनसा सर्वेषां वर्णानामेकदैव ज्ञानोत्पत्त्या तत्र प्रतीयमानस्य क्रमस्य बुद्धिनिष्ठत्वासम्भवात् । क्रमान्तरस्य चाप्रामाणिकत्वात् । तथा च क्रमासम्भवात् कथं वर्णानां प्रत्यायकत्वमिति चेत्- उच्यते। अत्र मतत्रयं सम्भाव्यते द्वैतसिद्धान्ते[२९]-

(अ) दैशिककालिकविलक्षणः बौद्ध एव कश्चन क्रमः वर्णेषूत्पद्यत इत्येकं मतम् । 'क्रमश्च बुद्धिनिमित्त एव न स्वतोऽस्ति'[३०] इति तत्त्वनिर्णयटीकायां तथोक्तत्वात् । न चैतत्कल्पे 'वर्णानां देवतानां च नित्यत्वान्न क्रमः स्मृतः'[३१] इति तन्त्रसारवाक्य-विरोधः। दैशिकः कालिको वा क्रमः वर्णेषु स्वतः स्वाभाविकः नास्तीति तदभिप्रायात् ।

(आ) नित्य एव क्रमो वर्णेष्वस्ति। वर्ण इव सोऽपि उच्चारणेनाभिव्यज्यत इति द्वितीयं मतम् । अत्र च 'तत्क्रमेणैव तैर्वर्णैः तैः स्वरैरेव' इति मूलम्, ये पूर्वकल्पे वेदाः स्थिताः, ये संहितादि-पदादिषूदात्तादिस्वराः स्थिताः, यश्च तत्क्रमः स्थितः त एवैतत्कल्पादौ विष्णुनोदीर्यन्ते' इति श्रीमत्पद्मनाभतीर्थीय-वचनञ्च मानम् ।

(इ) वर्णेषु स्वतः क्रमो नास्त्येव । अभिव्यक्तिक्रम एव तत्रोप-

२९. वे.अ.वा. - श्री जालिहाळ् श्रीनिवासाचार्यविरचितः।

३०. वि.त.नि.टी., पृ.सं.१८५

३१. तं.सा.सं - प्रथमाध्याये श्लो. २९

चर्यते । वर्णानां क्रमवत्त्वञ्च क्रमोपेताभिव्यक्तिविषयत्वमेवेति तृतीयं मतम् । 'व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते'[३२] इति तन्त्रसारवचनमत्र मानम् । उक्तञ्च तर्कताण्डवे- 'क्रमविशेषविशिष्टानां वर्णानां वेदत्वान्नित्यानां सर्वगतानाञ्च तेषां क्रमस्यायोगेन अभिव्यक्तिगतस्यैव तस्य वक्तव्यत्वात्'[३३] इति । श्रीमद्राघवेन्द्रतीर्थचरणैरपि 'अभिव्यक्तिक्रम एव वर्णे क्रमः'[३४] इति कण्ठरवेणैवोक्तम् ।

न च बौद्ध एव कश्चन क्रमो वर्णेषूत्पद्यत इत्याद्यपक्षोऽनुपपन्नः, बौद्धक्रमासम्भवस्योक्तत्वादिति वाच्यम् । अनुभवक्रमोपहितानामेव वर्णानां स्मृत्यावगाहनाङ्गीकारेण बौद्धक्रमस्यैव सम्भवात् । तथा च क्रमवतामेव वर्णानामर्थप्रत्यायकत्वाभ्युपगमात् नववनराजजारेत्यादौ क्रमयोरविशेषापादनासम्भवः । न चाननुभूतस्य स्मरणायोगात् अनुभव-क्रमस्य च पूर्वमननुभूतत्वात् कथं तदुपहि-तानां वर्णानां स्मृत्याऽव-गाहनम्, अनुभवक्रमरूपोपाधेः स्मृतिविषयत्वासम्भवादिति वाच्यम् । अनुभवक्रमस्यापि साक्षीन्द्रियेणानुभूतत्वात् । तत्तद्वर्णानां हि क्रमेणानुभवो भवति । तदनन्तरं क्रमविशिष्टानुभवानामेव साक्षिणानुभवात् साक्ष्यनुभूतस्य क्रमस्य स्मृतिविषयत्वोपपत्तिरिति सर्वमनवद्यम् । इत्थञ्च वर्णानां प्रत्यायकत्वे बाधकाभावेन वर्णसमुदायात्मकस्यागमस्य प्रामाण्यमुपपन्नम् ।

---

३२. तं.सा.सं प्रथमाध्याय, श्लो. २९ ३३. त.ता.

३४. तर्कताण्डवप्रकाशे तत्रैव ।

## १.५. वर्णा एव पदम्, पदान्येव वाक्यम्-

विभक्त्यन्ता वर्णा एव पदम् । आकाङ्क्षासन्निधियोग्यतावतां पदानां समूह एव वाक्यम् । जबगडदादीनां विभक्त्यन्तत्वाभावात् पदत्वम् । विभक्त्यन्ते पर्वतोऽग्निमानित्यादिवाक्येऽतिव्याप्तिवारणाय वर्णा इति । न च वाक्यस्यापि वर्णसमुदायत्वात् कथं वर्णपदेन तद्व्यावृत्तिसम्भव इति वाच्यम् । वाक्ये वर्णानां पदत्वेन प्रवेशोऽपि वर्णत्वेनाप्रवेशात् तद्व्यावृत्तिरित्यभिप्रायात् । एतेन विभक्त्यन्तस्य वर्णाव्यभिचारात् कृतं वर्णग्रहणेनेति निरस्तम् । यद्वा 'देवदत्तः' इत्यादौ अन्तिमवर्णस्य विभक्त्यन्ततया पूर्वेषां विभक्त्यन्तत्वाभावात् विभक्त्यन्तवर्णोपेतं पदमित्यर्थलाभाय वर्णग्रहणमिति ध्येयम् । स्फोटनिरासाय वा तत् । 'वर्णाः' इत्यत्र बहुवचनमतन्त्रम् । तेन 'अ इति ब्रह्म','एको नैकः सवः कः किम्' इत्यादौ 'अः','कः' इत्यादेः पदत्वसिद्धिः । विभक्तिर्नाम सुप्तिङौ । 'विभक्तिश्च'[३५] इति सूत्रे सुप्तिङोर्विभक्तिसंज्ञाया अनुशासनात् । 'सुप्तिङन्तं पदम्'[३६] इति हि पाणिनिः सूत्रयामास । तदनुरोधेन 'विभक्त्यन्ता' इत्युक्तम् ।

ननु यदि वर्णा एव पदं तदा कथं 'एकं पदम्' इति एकताप्रतीतिरिति चेत्- उच्यते । एकं पदमिति एकताप्रतीतिस्तु एकार्थाभिधान-रूपोपाधिनिमित्तिका । एकदेशावस्थानरूपोपाधिना निमित्तेन भिन्नेष्वपि तरुषु 'एकं वनम्' इति प्रतीतिवत्[३७] । एवमेव भिन्नेष्वपि पदेषु संसर्ग-विशेषात् एकार्थाभिधानोपाधिना एकत्वस्य सम्भवेन एकं वाक्यमिति प्रतीतिश्चोपपद्यते । एतादृशः वर्ण-पद-वाक्यात्मकः निर्दुष्टः शब्दः प्रमाणम् ।

---

३५. पा.सू. १.४.१०४ ३६. पा.सू. १.४.१४

## १.६. शाब्दबोधसामग्री

निर्दुष्टशब्दत्वं निर्दोषवाक्यत्वं वा आगमलक्षणमित्युक्तत्वादेव अपौरुषेयस्यापि वेदस्य न प्रामाण्यानुपपत्तिः । आप्तवाक्यत्वस्य शब्दप्रमाणलक्षणत्वे तु अपौरुषेये तदभावात् वेदादिसङ्ग्रहो न स्यादिति ध्येयम् ।

तत्र विभक्त्यन्ताः वर्णा एव पदम्; आकाङ्क्षायोग्यतासन्निधिमन्ति पदानि तु वाक्यमित्युक्त्या आकाङ्क्षाज्ञानस्य, योग्यताज्ञानस्य, सन्निधि-ज्ञानस्य च शाब्दबोधहेतुत्वमुक्तं भवति । तदेतेषु आकाङ्क्षायोग्यता-सन्निधिष्वन्यतमस्याप्यभावे शाब्दबोधानुदयात् प्रत्येकमेतेषां त्रयाणामपि शाब्दबोधहेतुत्वमङ्गीकारि ।

**आकाङ्क्षा-** आकाङ्क्षा च जिज्ञासा । इयमाकाङ्क्षा साक्षात् चेतनस्य श्रोतुर्धर्मः । तद्विषयत्वात् पदार्थाः साकाङ्क्षाः । तत्प्रतिपादकत्वात् पदान्यपि साकाङ्क्षाणि[३८]। जिज्ञासाविषयीभूतपदार्थविषयप्रतिपत्तिजन-कत्वं पदानामाकाङ्क्षा इति यावत्[३९] । 'गौरश्वः पुरुषो हस्ती' इत्यादौ 'अमू घटः' इत्यादौ च आकाङ्क्षाभावात् न शाब्दबोधः ।

इयमाकाङ्क्षा स्वरूपतो न शाब्दबोधहेतुः । सत्यामप्याकाङ्क्षायां तदज्ञाने शाब्दबोधादृष्टेः । असत्यामप्याकाङ्क्षायां तज्ज्ञानाच्छाब्द-बोधोदयात् । किन्तु तज्ज्ञानत्वेन तस्य हेतुत्वम् ।

---

३७. वि.त.नि.टीका - १९२ पृष्ठे। ३८. प्र.प.आगमपरिच्छेदे, ३८८ पृष्ठे।
३९. त.ता.न्यायदीपः - द्वितीयपरिच्छेदे १२ पृष्ठे।

**सन्निधिः**-सन्निधिरविलम्बेनोच्चरितत्वम्[४०]। इयमेव आसत्तिरित्यपि व्यपदिश्यते। अत्राविलम्बशब्देन व्यवधानाभाव उच्यते। उच्चारितत्व-शब्देन तु पदोपस्थित्यनुकूलवक्तृव्यापारमात्रं विवक्षितम्। तेन पत्र-लिखितमौनिश्लोकादौ अङ्गुल्यादिचेष्टाविशेषज्ञापितपदसमूहरूपे वाक्ये च उच्चारणाभावात् सन्निधेरभाव इति शङ्कानवकाशः। इत्थञ्च निष्फलान्वयबोधविरोधिव्यवधानशून्यः शब्दोपस्थित्यनुकूलवक्तृ-व्यापारविषयता आसत्तिरित्यर्थः[४१]। प्रहरे प्रहरे उच्चारिते गामानयेत्यादि-शब्दे सन्निधेरभावात् न शाब्दबोधः।

ननु पद्ये कुलके वैतादृशासत्तेरभावादव्याप्तिः।

'श्रियः पतिः श्रीमति शासितुं जगत्
जगन्निवासो वसुदेवसद्मनि।
वसन् ददर्शावतरन्तमम्बरात्
............................ ॥'

इत्यादिश्लोके व्यवधानशून्यत्वस्याभावात्। तथा कुलके क्रियापदस्य बहुश्लोकव्यवधानात्तत्राप्यव्याप्तिरिति चेन्न। श्लोककुलकादावासत्त्य-भावस्येष्टत्वात्। तत्र वक्तृतात्पर्यानुसारेण योजयित्वा योजनावाक्यादेव शाब्दबोधाङ्गीकारात्। 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यादौ तु तात्पर्यज्ञापकस्याभावात् नात्र योजनयापि सन्निधिः। तर्कताण्डवकारैस्तु श्लोककुलकादौ आसत्तिरङ्गीकृता। तत्रस्थव्यवधानस्य निष्फलत्वा-

---

४०. प्र.प. आगमपरिच्छेदे पृ.सं. ३८८

४१. 'पदोपस्थित्यनुकूलशब्दव्यापारे निष्फलस्यान्वयबोधविरोधिव्यवधानस्याभाव आसत्तिः' इति तर्कताण्डवोक्तस्यार्थत अनुवादोऽयम्।

भावात् अन्वयबोधविरोधित्वाभावाच्च । छन्दोनुरोधाय अलङ्काररस-विशेषयोराधानाय वा श्लोके व्यवधाने कृतेऽपि 'श्रोता एवं योजयिष्यति' इति अभिप्रायस्य कवेः सत्वेन तत्रासत्तिरस्त्येव। अत एव तैः निष्फल-स्यान्वयबोधविरोधिव्यवधानस्याभाव एव आसत्तिरित्युक्तम्[४२] । न पुनः व्यवधानमात्रस्याभावः ।

**योग्यता**- प्रतीतस्यान्वयस्य प्रमाणविरोधाभावो योग्यता[४३] । एतादृशी योग्यता पदार्थधर्मः । तद्वाचकत्वात्पदान्यपि योग्यतावन्तीत्यु-च्यन्ते । प्रमाणाविरुद्धान्वयप्रतियोग्यभिधायकत्वं पदानां योग्यता इति यावत् । तदुक्तं प्रमाणलक्षणटीकायां 'स्वान्योन्यान्वययोग्यतावदर्थाभि-धायकत्वं योग्यत्वम्'[४४] इति । लक्षणघटकीभूता योग्यता च प्रमाणाविरोध एव । योग्यताभावात् वह्निना सिञ्चतीत्यादिना वाक्येन न शाब्दधीः ।

तात्पर्यज्ञानमपि शाब्दसामग्री इति केचन[४५] । किन्तु प्रकरणादेरिव तात्पर्यज्ञानस्यापि नानार्थादिस्थलेऽर्थविशेषबोधनियामकत्वाङ्गीकारात् तात्पर्यज्ञानस्य शाब्दसामग्रीत्वं नाङ्गीक्रियते । तदेवमाकाङ्क्षाज्ञानम्, सन्निधिज्ञानं, योग्यताज्ञानश्चेति त्रयं शाब्दबोधं प्रति कारणभूतमिति सारः । विषयेऽस्मिन् शब्दप्रामाण्यवादिषु दर्शनेषु नास्ति विप्रति-पत्तिः ।

---

४२. त.तां. द्वितीयपरिच्छेदे पृ.सं. १३

४३. प्र.प. शब्दपरिच्छेदे।

४४. प्र.ल.टीका., पृ.सं. २५

४५. 'आसत्तिर्योग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते, कारणम् ।'
इति कारिकावल्यां विश्वनाथतर्कपञ्चाननः ।

## १.७. वृत्तिज्ञानमपि शाब्दसहकारिकारणम्

संस्कृतभाषयोच्चरितमसंस्कृतज्ञो नावगच्छति । म्लेच्छभाषितेन तु संस्कृतज्ञस्य बोधो न जायते । कुत एवम्? न चाकाङ्क्षादिसामग्री विरहादेवमिति शक्यते वक्तुम् । संस्कृतज्ञस्य तैरेव संस्कृतपदैः बोधोदयात् । यद्यत्राकाङ्क्षादिर्न स्यात् कथं तर्हि संस्कृतज्ञेनापि बुद्ध्येत? अतोऽत्र नियामकम् आकाङ्क्षादिव्यतिरिक्तं किञ्चिदन्यदभ्युपेयम् । तदेव वृत्तिज्ञानम् । पदपदार्थसम्बन्धज्ञानमिति यावत् ।

शब्दात् शाब्दोत्पत्तावयं क्रमः- प्रथमं तावत् शब्दं शृणोति । पदे (शब्दे) ज्ञाते पदार्थः स्मर्यते । ततश्च स्मृतानां पदार्थानां परस्परविशेषान्वयबोधात्मकः शाब्दबोधो जायते। इत्थञ्च पदज्ञानं पदार्थस्मृतिद्वारा शाब्दबोधं प्रति कारणम् । अत एव तत् करणमित्युच्यते ।

पदज्ञानात् पदार्थस्मृतिः कथमित्यत्र विचारः कार्यः । घटशब्दे हि ज्ञाते कम्बुग्रीवादिमद्रूपः पदार्थः तस्यैव स्मृतिविषयो भवति येन हि पुंसा 'घटशब्दस्तमर्थं वक्ति' इति विषयोऽवगतः स्यात् । इत्थञ्च हस्तिपकज्ञाने हस्तिस्मरणमिवात्रापि एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति रीत्यैव पदार्थस्मरणम् ।

इदञ्च पदपदार्थयोः सम्बन्धाभावे न घटते । स च सम्बन्धः संयोगादेरयोगात् शक्त्युपलक्षणगौण्याद्यन्यतमः वृत्तिरिति नाम्ना शास्त्रे प्रसिद्धः । सम्बन्धज्ञानञ्च सम्बन्धिज्ञानव्याप्यम् । यो हि संस्कृतपदं न जानाति पदार्थं तु जानाति सोऽसंस्कृतज्ञः सम्बन्धिभूतपदज्ञानाभावात् सम्बन्धमपि न जानातीति न तेन पदार्थः स्मर्यते । अत एव न

तस्य शाब्दबोधः । इत्थञ्च वृत्तिज्ञानमपि शाब्दबोधे सहकारिकारणम् ।

## १.८. श्रुतानुस्मृतसम्बन्धस्यैव शब्दस्य प्रामाण्यम्-

बौद्धास्त्वाहुः । शब्दस्यैव तावत्प्रामाण्यं दुर्वचम् । तथा हि - प्रमाकरणं हि प्रमाणम् । प्रमाकरणञ्च तदुच्यते यस्मिन् सति प्रमा भवत्येव नासति । कार्यनियतपूर्ववृत्तेरेव कारणत्वात्कारणविशेषस्यैव च करणत्वात् । किन्तु सत्यपि शब्दे शाब्दप्रमा न जायते । शब्दो हि येनकेनचिदुच्चरितः सर्वदा वर्तते । न हि सर्वस्य सर्वदा शाब्दप्रमा जायते । अतः सत्यपि शब्दे प्रमानुदयादप्रमाणं शब्दः इति ।

तदिदमविचारभणितम् । यतः शब्दसत्त्वेऽपि प्रमानुदयमात्रेण शब्दस्याप्रामाण्याङ्गीकारे सत्यपि धूमे अग्निज्ञानानुदयात् धूमस्यापि अप्रामाण्यप्रसङ्गो दुर्वार एव । ननु न धूममात्रमनुमानम्, येनायं प्रसङ्गः स्यात् । किन्तु धूमज्ञानम् । सति तु धूमज्ञाने भवत्येवानुमितिरतो न दोष इति चेत्- न । ज्ञातेऽपि धूमे अज्ञातव्याप्तिकस्यानुमित्यनुदयात् । ननु व्याप्तिपक्षधर्मतावत्त्वेनानुसंहित एव धूमो अनुमानमित्युच्यते, तस्मिंश्च सत्यनुमोत्पद्यत एवेति चेत्- तर्हि वयमपि ब्रूमो न शब्दमात्रं प्रमाणम्, न वा शब्दज्ञानमात्रम्, किन्तु श्रुतोऽनुस्मृतसम्बन्धश्च[४६] । न हि केवलं शब्दोऽर्थबोधने समर्थः । किन्तु श्रुत एव । श्रुतोऽपि शब्दोऽव्युत्पन्नस्य (अगृहीतशक्तिकस्य) नार्थबोधनाय प्रभवति । श्रुतोऽनुस्मृतसम्बन्धश्च शब्दः शाब्दबुद्धिं जनयत्येवेति श्रुतानुस्मृतसम्बन्धस्यैव शब्दस्य प्रामाण्यमिति सिद्धान्तः ।

---

४६. न्या.सु.- १. पृ.सं. ७६५

## १.९. शब्दार्थयोस्सम्बन्धानुपपत्तिशङ्का -

नन्वर्थेनासम्बद्धस्य शब्दस्यार्थावबोधकत्वे असम्बद्धत्वाविशेषात् सर्वोऽपि शब्दः सर्वमर्थं बोधयेदित्याद्यतिप्रसङ्गात् अर्थसम्बद्ध एव शब्दोऽर्थावगमक इति वक्तव्यम् । न चैतत् सम्भवति । सम्बन्धानुपपत्तेः । स हि सम्बन्धः किं तादात्म्यम् ? उत संयोगः ? आहो समवायः? न प्रथमः । शब्दतदर्थयोस्तादात्म्याङ्गीकारे वह्निशब्दोच्चारणे सति मुखभागे दाहप्रसङ्गः, अन्नमित्युक्ते उदरपूरणम्, असिरित्युक्ते असिकार्यं जिह्वापाटनञ्च जायेत[४७] । अतीतादिप्रतिपादकस्य वर्तमानकाले उच्चार्यमाणस्य रावणोऽसीदित्यादिशब्दस्य अर्थेन तादात्म्ये रावणादीनामपि वर्तमानतापत्तिः । सद्योच्चरितस्य शब्दस्य वा त्रेतायुगस्थतापत्तिरित्यादि विप्लवप्रसङ्गः । नापि द्वितीयः । शब्दस्य गुणत्वेन संयोगानुपपत्तेः । द्रव्ययोरेव संयोग इत्यङ्गीकारात् । न च शब्दो द्रव्यम्, साक्षीन्द्रियसम्बद्धत्वात् सङ्ख्यावत्त्वाच्च घटवत्; श्रोत्रं च नित्यद्रव्यग्राहकं निरवयवेन्द्रियत्वात् मनोवदित्यादि अनुमानप्रमाणेन शब्दो द्रव्यमतो द्वितीयपक्षाङ्गीकारे न दोष इति वाच्यम् । द्रव्यत्वेऽपि शब्दस्यातीतानागतादिनार्थेन संयोगानुपपत्त्याऽतीताद्यप्रतिपादकत्वं स्यात् । किञ्च शब्दः किं मूर्तः ? उत सर्वगतः? मूर्तत्वे तस्य क्रिययाऽर्थसंयोगे सति अन्तरावस्थितार्थानामपि शब्दसंयुक्तत्वेन तद्विषयत्वापत्तिः । सर्वगतत्वे तु शब्दस्य वर्तमानसकलद्रव्यप्रतिपादकत्वप्रसङ्गः । सकलमूर्तद्रव्यसंयोगित्वात्तस्य । गुणकर्मादिप्रतिपादकत्वं तु शब्दस्य स्वप्नायितं स्यात् । तैः साकं संयोगासम्भवात् । नापि च समवाय इति तृतीयः । आकाशगुणस्य शब्दस्याकाशादन्यत्र

४७. पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः । (न्या.द.- २-१-५३)

समवायायोगेनाकाशेतराप्रतिपादकत्वं, सर्वशब्दानामाकाशमात्रप्रतिपादकत्वञ्च स्यात् । ननु द्रव्यं शब्द इत्युपपादितमिति चेन्न । द्रव्यस्यापि तस्य घटादिना न हि समवायः सम्भवति । युतसिद्धत्वात् । 'अयुतसिद्धवृत्तिः समवायः' इत्यङ्गीकारात्[४८] । एवञ्च शब्दार्थयोः न तादात्म्यं, न वा संयोगः, नापि समवायः सम्भवति । एतद्व्यतिरिक्तश्च सम्बन्धोऽप्रामा-णिकः । इत्थञ्च कथमत्र व्यवस्था ?

अत्रोच्यते । अस्त्येव शब्दशब्दार्थयोः कश्चन सम्बन्धः । स च तादात्म्यादेरसम्भवे अन्यो भविष्यति[४९] । न हि तादात्म्यसंयोगसमवाया इति त्रय एव सम्बन्धा इति नियमोऽस्ति । तथा सति धूमाद् अग्न्यनुमितिरिति न स्यात् । न हि धूमाग्न्योः समवायः, तादात्म्यं वास्ति । नन्वनुमेयानुमानयोः संयोग एव प्रत्यासत्तिरित्युच्यते सा चास्त्येव धूमाग्न्योरिति चेत्- तर्हि रूपरसयोस्तदभावात् रसेन रूपानुमितिर्न स्यात्, पाषाणादेरपि धूमेन संयोगस्य सत्त्वात् धूमेन पाषाणानुमितिरपि स्यादित्यादिकोलाहलः प्रसज्येत ।

ननु तादात्म्याद्यसम्भवादेव तत्र व्याप्यव्यापकभावः प्रत्यासत्तितया कल्पितः । स चास्ति रूपरसयोः, धूमाग्न्योश्च; नास्ति च धूमपाषाणयोरिति चेत्- तावता वयमपि चरितार्थाः । तादात्म्याद्यसम्भवे साध्यहेत्वोर्व्याप्यव्यापकभाव इव पदपदार्थयोर्वाच्यवाचकभावस्यैव सम्बन्धतया स्वीकारात् ।

---

४८. नित्यसम्बन्धः समवायः । अयुतसिद्धवृत्तिः ।
(त.सं, कर्मादिनिरूपणप्रकरणम्) ।

४९. न्या.सु -१, पृ.सं. ८७०

अयमत्राभिप्रायः । द्वैतसिद्धान्ते समवायनामकसम्बन्ध एव नाङ्गीकृतः । गुणगुणिजातिव्यक्त्यादीनां संयोगतादात्म्याभ्यामेवोपपत्तेः ।

'द्रव्ययोरेव संयोगः' इति तु नैयायिकानां समयः । अत एव गुणकर्मसामान्यविशेषैः साकं द्रव्यस्य संयोगासंम्भवात् तैः समवायोऽङ्गीकृतः । द्रव्ययोरप्यवयवावयविभावापन्नयोः समवाय इति तेषां वादः । किन्तु अनुभवविरुद्धोऽप्रामाणिकश्चायं वाद इति प्रतिपादयन्तो द्वैतवेदान्तपटवः समवायं नाङ्गीकुर्वन्ति । समवायाङ्गीकारेऽनवस्थादिबाधकस्तबकमण्याविर्भावयन्ति । 'द्रव्ययोरेव संयोगः' इत्यप्रामाणिकपरिकल्पनमेव हि समवायाङ्गीकारे मूलकारणम् । घटपटादिप्रत्यक्षे चक्षुस्त्वगादीन्द्रियाणां घटादिना विषयेण संयोगस्य सम्भवेऽपि श्रोत्रस्य शब्देन तदसम्भवात् समवायोऽङ्गीकृतः । अभावेन साकं समवायस्याप्यसम्भवात् विशेषणताप्रत्यासत्तिरभ्युपगता । अनुमाने हेतुसाध्ययोस्तु क्लृप्तसन्निकर्षासम्भवे साध्यानुमितिरूपकार्यस्य तु स्पष्टदृष्टत्वात् व्याप्यव्यापकभावस्य प्रत्यासत्तित्वमभ्युपेतम् । तथा चैतस्य पर्यालोचने एतावत्तु स्पष्टमाकलयामः यत् स्पष्टदृष्टकार्यापलापो न युक्तः, दृष्टकार्यवशादेव तादात्म्याद्यसम्भवे सम्बन्धान्तरं कल्प्यमिति । प्रकृतेऽपि शब्दस्यासम्बद्धस्य गमकत्वेऽतिप्रसङ्गात् तादात्म्यादेश्चासम्भवात् सम्बन्धान्तरं कल्प्यम् । स एव सम्बन्धः 'वृत्तिः' इति गीयते ।

## १.१०. वृत्तिशब्दार्थः-

वृत्तिशब्दोऽयमनेकार्थः । लोके कोशादौ जीविकेत्यर्थे प्रसिद्धः[५०]।

---

५०. आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने। अ.को., श्लो. ८८७

अद्वैतवेदान्ते तु अन्तःकरणपरिणामे रूढः । द्वैतवेदान्ते च स्वरूप-व्यतिरिक्ते ज्ञाने प्रसिद्धः[५१]। वैयाकरणेषु सूत्रस्यार्थविवरणात्मकवाक्ये रूढः[५२] । आलङ्कारिकेषु पुनः कैशिक्यादिषु रसप्रतिपादकेषु[५३] । नैयायिकेष्वाधेयतायाम्[५४] । किन्तु पदपदार्थयोः सम्बन्धवाचकोऽप्ययं वृत्तिशब्द इति सर्वेषामप्येषां सम्मतम् ।

तथा ह्याचक्षते नैयायिकाः- 'वृत्तिश्च शक्तिलक्षणान्यतरसम्बन्धः'[५५] इति । वेदान्तिनश्चागादिषुः- 'उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः'[५६]इति । वैयाकरणाश्च निबबन्धुः- 'जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा'[५७] इति । आलङ्कारिकाश्चाभाणिषुः- 'वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः । व्यङ्ग्यो व्यञ्जनया ताः स्युः तिस्रः शब्दस्य वृत्तयः'[५८] इति । एतेन शब्दार्थयोस्सम्बन्धस्य वृत्तिपदवाच्यत्वमेतैः सर्वैरनुमोदितमिति सिद्धम् ।

'विद्याविहीनः पशुः' इत्युक्ते सति शब्दस्यास्यार्थं न पशुर्वेत्ति । न वा शिशुर्वेत्ति । तत्कस्य हेतोः? शब्दार्थसम्बन्धज्ञानाभावात् । ज्ञायमानायाः वृत्तेरभावादिति यावत् । अतः वृत्त्यैव शब्दोऽर्थे प्रवर्तते।

---

५१. तद् द्विविधम् - स्वरूपं मनोवृत्तिरूपश्चेति । प्र.प., पृ.सं. ९७

५२. 'सूत्रस्य सोदाहरणमर्थविवेचनमेव वृत्तिः (व्याकरणशास्त्रेतिहासः,पृ.सं. १३०

५३. शृङ्गारे कैशिकी वीरे सात्वत्त्यारभटी पुनः ।
रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती ॥ (सा.द., ६-१२२)

५४.साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः । (त.सं. अनुमानखण्डः) ।

५५. मुक्ता. पृ.सं. ५४७

५६. अ.व्या. १.४.२९

५७. वै.भू.सा., पृ.सं २३७

तथा च वर्तते= प्रवर्तते शब्दोऽर्थे अनयेति व्युत्पत्त्या वृत्तिशब्दः पदपदार्थयोः सम्बन्धं वक्ति । तदुक्तं तर्कताण्डवे-

'वृत्तिश्च शब्दस्य तात्पर्यरूपमर्थप्रतिपादकत्वम्'[५९] इति ।

गङ्गेशोपाध्यायस्तु- 'शाब्दबोधानुकूलपदार्थोपस्थितिहेतुः पदार्थ-सम्बन्धः'[६०] इत्याह शक्तिवादे । तर्कताण्डवाकाराः श्रीव्यासतीर्थ-पूज्यचरणास्तु 'वृत्तिश्च शब्दस्य तात्पर्यरूपमर्थप्रतिपादकत्वम्' इति वदन्तो मणिकारमतं निराचक्रुः । तथा हि- वाक्यस्थं पदं न स्मारकमिति सिद्धान्तः । उपपादितश्चैतत् सपरिकरं तर्कताण्डवे[६१] । उक्तश्च सुधायाम्- 'पदनिचयश्रवणवाक्यार्थबोधावन्तरा पदार्थस्मृतीना-मेवानभ्युपगमात्'[६२] इति । तथा च वाक्यस्थेषु पदेषु शाब्दान्वय-बोधानुकूलायाः स्मृतिरूपायाः पदार्थोपस्थितेरेवाभावेन शाब्दबोधानु-कूलपदर्थोपस्थितिहेतुत्वरूपं वृत्तिलक्षणमसम्भवि स्यात् ।

किञ्चैवं खलु व्यवहरन्ति- गङ्गाशब्दः शक्त्या सम्बन्धेन प्रवाहे वर्तते; गङ्गाशब्दो लक्षणासम्बन्धेन तीरे वर्तत इति । अत्र तु वर्तत इत्यस्य वृत्तिमानित्यर्थः । उभयत्रापि सम्बन्धेनेत्यत्र 'हेतौ'[६३] इति हेतुतृतीया विवक्षिता । तथा चानेन व्यवहारेण सम्बन्धस्य वृत्तिहेतुत्वं बोध्यते । वृत्तिं प्रति हेतुभूतस्य पदार्थसम्बन्धस्य वृत्तिस्वरूपत्वं न घटते । तथा च मणिकृता यदुक्तं 'पदार्थसम्बन्ध एव वृत्तिः' इति तदसम्भवीत्यत्र लोकव्यवहार एव प्रमाणम् ।

---

५८. सा.द. २-३ ५९. त.तां. ३ द्वितीयपरिच्छेदः, पृ.सं.११०

६०. श.वा ६१. द्वितीयपरिच्छेदे भाट्टाभिमताभिहितान्वयवादभङ्गे पृ.सं. १७०

६२. न्या.सु. जिज्ञासाधिकरणे ६३. पा.सू. २.३.२३

ननु यथा 'गजेन धनवान्' 'विद्यया धनवान्' इत्यादौ गजाभिन्न-धनवान्, विद्यारूपधनवानित्यर्थः तथा 'गङ्गाशब्दो लक्षणासम्बन्धेन तीरे वर्तत इत्यत्रापि लक्षणासम्बन्धाभिन्नवृत्तिमानित्यर्थः स्वीक्रियते। तथा च पदार्थसम्बन्धस्य वृत्तित्वमुपपन्नमिति चेत्- सत्यमेवं व्यवहारविरोधः कथञ्चित् परिहृतस्तथापि 'गङ्गायां घोषः' इत्यत्र 'गङ्गाशब्दस्य प्रवाहे वृत्तिर्नास्ति' इति गलपाशायते एव। 'गङ्गायां घोषः' इति लाक्षणिकस्थले हि गङ्गाशब्दस्य तीरे वृत्तिरस्ति। नास्ति च प्रवाहे। 'गङ्गाशब्दस्य प्रवाहे वृत्तिर्नास्त्यत्र' इति लोकव्यवहार एवात्र मानम्। यदि पुनः शाब्दबोधानुकूलपदर्थोपस्थितिहेतुभूतस्य पदार्थसम्बन्धस्यैव वृत्तित्वं तर्हि लाक्षणिकस्थले गङ्गाशब्दस्य प्रवाहेऽपि वृत्तिः प्रसज्येत। तथा हि- लाक्षणिकस्थले वाच्यार्थसम्बन्धः पदार्थोपस्थितिहेतुरित्यत्र नास्ति विवादः। तथा च लक्षणास्थले 'गङ्गायां घोषः' इत्यत्र गङ्गापदेन तत्तीरमेव लक्ष्यते; न तु गुर्जरदेशः, न वा यमुनातीरम्। गुर्जरदेशस्य यमुनातीरस्य वा गङ्गाप्रवाहरूप-वाच्यार्थेन सम्बन्धाभाव एवात्र कारणम्। तथा च वाच्यार्थे लक्ष्य-सम्बन्धः तीररूपपदार्थोपस्थितौ हेतुरित्युक्तं भवति। इत्थञ्च शाब्द-बोधानुकूलतीरादिपदार्थोपस्थितिहेतुभूतस्य तीरसम्बन्धस्य प्रवाहे विद्य-मानत्वेन मणिकारोक्ता पदार्थसम्बन्धरूपा वृत्तिः प्रवाहे वर्तत इत्यङ्गी-कार्यं स्यात्। न चेष्टापत्तिः। तथा व्यवहाराभावात्। प्रत्युत 'गङ्गायां घोषः'इति लाक्षणिकस्थले गङ्गाशब्दस्य प्रवाहे वृत्तिर्नास्तीत्येवं रीत्या

वृत्त्यभावव्यवहार एवास्तीत्यतिव्याप्तिदोषग्रस्तमपीदं लक्षणम्[६४] । अतः शब्दस्य तात्पर्यरूपार्थप्रतिपादकत्वरूपः पदपदार्थसम्बन्ध एव वृत्तिः ।

॥ इति प्रथमः परिच्छेदः ॥

---

६६. गङ्गायां घोषः' इत्यादौ गङ्गाशब्दस्य प्रवाहे वृत्त्यभावव्यवहाराच्च ।
त.तां. पृ.सं. १११

# द्वितीयः परिच्छदः

## २. वृत्तिप्रभेदाः

### २.१. वृत्तिप्रभेदादिविषये दर्शनान्तरेषु विप्रतिपत्तयः ।

तदेवं निरूपितायाः वृत्तेः प्रभेदावान्तरप्रभेदतत्स्वरूपादिविषये न्यायमीमांसकवेदान्तपाणिनीयादिदर्शनानि विवदन्ते । विवदमानेष्वपि तेषु कश्चन समानोंऽश अनेकमुख्यविषयेषु सम्प्रतिपत्तिश्च सन्दृश्यते । परन्तु द्वैतदर्शनेऽङ्गीक्रियमाणाः परममुख्यवृत्ति-मुख्यवृत्ति-अमुख्य-वृत्त्यादिरूपाः प्रभेदाः इदं प्रथमतः आविष्कृताः नैकमप्यन्यदर्शन-मेतद्विषये पिशुनयति । अतः द्वैतवेदान्तस्य वृत्तिप्रभेदादिवैशिष्ट्यावगमार्थं प्रप्रथमं न्यायादिषु केषुचिद्दर्शनेषु वृत्तिप्रभेदादिविषये सिद्धान्तितोऽर्थः सङ्क्षेपेणात्र निरूप्यते । यद्यप्यत्र न्यायादिदर्शनोक्तविषये विवदमानं द्वैतदर्शनं तदुक्तवृत्तिप्रभेदस्वरूपादिकं प्रत्यनुयुज्य प्रत्याचष्टे । तथाऽप्यवगतिसौलभ्यार्थं स विषयः नात्र द्वितीये परिच्छेदे निरूप्यते । स एषः दर्शनान्तरप्रत्याख्यानप्रकारः चतुर्थादिषु परिच्छेदेषु तत्र तत्र निरूपयिष्यते ।

#### २.१.१. न्यायसिद्धान्तः-

शाब्दबोधानुकूलपदार्थोपस्थितिहेतुभूत; पदपदार्थयोः सम्बन्धः वृत्तिरिति वदन्तो नैय्यायिकाः द्विविधां वृत्तिमभ्युपगच्छन्ति । शक्तिर्लक्षणा चेति ।[१] या तु वेदान्तिभिः गौणीति तृतीया

१. वृत्तिश्च शक्तिलक्षणान्यतरः संबन्धः । मुक्ता. पृ.सं. ५४७

वृत्तिरभ्युपगता सा लक्षणायामेवान्तर्भाविता नैयायिकैः । शक्तिः सङ्केतश्चेत्यनर्थान्तरम् । शक्तिश्च ईश्वरसङ्केतरूपः पदेन सह पदार्थस्य संबन्धः। स चास्मात्पदादयमर्थो बोद्धव्य इत्याकारकेश्वरेच्छारूपः ।[२] तद्विषयत्वरूपो वा । न चाधुनिके नाम्नि ईश्वरेच्छारूपशक्तेरभावप्रसङ्ग इति वाच्यम् । तत्रापि 'एकादशेऽह्नि पिता नाम कुर्यात्' इति एकादशाहकालीनपित्रुच्चारणविषयनामत्वेन सामान्यरूपेणेश्वरेच्छायाः सत्वादस्त्येव शक्तिः । आधुनिकसङ्केतितेषु टिधुप्रभृतिषु नास्ति शक्तिरिति साम्प्रदायिकाः । नवीनास्तु नेश्वरेच्छा शक्तिः । किन्तु केवला इच्छैव । अतः आधुनिकसङ्केतितेष्वपि पाणिन्यादिसङ्केतकपुरुषेच्छारूपाया शक्तेस्सत्वेन शाब्दबोधोपपत्तिरित्याहुः ।

शक्तिग्रहश्च व्याकरण,उपमान, कोश, आप्तवाक्य, व्यवहार, वाक्यशेष, विवरण, सिद्धपदसान्निध्येभ्यो जायते ।[३]

मुक्तावल्यामेवमुक्तम्- 'शक्तं पदम् । तच्चतुर्विधम् । क्वचिद्यौगिकम्, क्वचिद्रूढं, क्वचिद्योगरूढं, क्वचिद्यौगिकरूढमिति'।[४] एतेन पदचातुर्विध्येन शक्तेश्चातुर्विध्यं ग्रन्थकर्तुरभिमतं ज्ञायते । तथा च शक्तिश्चतुर्विधा । योगः, रूढिः, योगरूढिः, यौगिकरूढिश्चेति । अवयवशक्तिः,समुदायशक्तिश्चेति योगरूढ्योः क्रमेण नामान्तरम् । पाचकादिशब्दाः यौगिकाः । अवयवशक्त्या पाककर्तुर्बोधात् । घट-

---

२. मुक्ता-५४८ पृष्ठे । न्या.कौ., पृ.सं. ५४९

३. शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः । मुक्ता. पृ.सं. ५५०

४. मुक्ता. पृ.सं. ५८१

पटादिशब्दास्तु अवयवशक्तिनैरपेक्ष्येण समुदायशक्त्या बोधयन्ति । ते रूढाः । पङ्कजमधुकरादिशब्दास्तु योगरूढाः । अत्रावयवशक्तिविषये समुदायशक्तेरपि सत्त्वात् । यत्र तु यौगिकार्थरूढार्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढम् । यथोद्भिदादिपदम् । इदं हि पदं ऊर्ध्वभेदनकर्तारं तरुगुल्मादिकमवयवशक्त्या बोधयति श्रुतिसिद्धं यागविशेषन्तु रूढ्या । तदेतत्सर्वं संक्षेपेणोक्तं महादेवपण्डितेन न्यायकौस्तुभे- 'इत्थं विशिष्टवाचकत्वेन व्यवस्थितेषु शब्देषु केचन शब्दाः केवल-यौगिकाः । यथा पाचकपाकादयः । केचन केवलरूढाः । यथा गवादिशब्दाः । केचन योगरूढाः । यथा पङ्कजादिशब्दाः । केचन यौगिकरूढाः । यथा उद्भिदादिशब्दाः'[५] इति ।

**लक्षणा-** जघन्या वृत्तिरिति कथ्यते । गौतमसूत्रेषु लक्षणेति पदं न दृश्यते । किन्तूपचारपदं तत्रास्ति । तत्र बहूनि उपचारनिमित्तानि चोपन्यस्तानि ।[६] लक्षणा च शक्यसंबन्धः ।[७]

इयं शक्यसम्बन्धिनमर्थविशेषं बोधयति । तात्पर्यानुपपत्तिर्लक्षणा-बीजम् । प्राचीनास्तु अन्वयानुपपत्तिं लक्षणाबीजं जगदिरे । तत्त्व-चिन्तामणिकारेणापि अन्वयानुपपत्तिवशादेव लक्षणेति न्यरूपि । किन्त्ववार्चीना अत्र विवदन्ते । तैरेवमुच्यते- 'यद्यन्वयानुपपत्तिर्लक्षणा

---

५. न्या.कौ., पृ.सं. ५३४

६. सहचरण-स्थान-तादर्थ्य-वृत्त-मान-धारण-सामीप्य-योगसाधन-आधि-पत्येभ्यः ब्राह्मण-बाल-कट-राज-सक्तु-चन्दन-गङ्गा-शकट-अन्न-पुरुषेषु अतद्भावेऽपि तदुपचारः । 'न्या.द.२.२.६२.।'

७. लक्षणा शक्यसंबन्धस्तात्पर्यानुपपत्तितः । कारि. ५८८

बीजं स्यात्तर्हि 'यष्टीः प्रवेशयेत्यादौ लक्षणा न स्यात् । यष्टिषु प्रवेशान्वयानुपपत्तेरभावात् । तेन तत्प्रवेशे भोजनतात्पर्यानुपपत्त्या यष्टिधरेषु लक्षणा' इति ।[८]

तथा च तात्पर्यानुपपत्तिरेव लक्षणाबीजमित्यर्वाचीनानां सिद्धान्तः।

इयञ्च लक्षणा न्यायमते त्रिधा भिद्यते । जहल्लक्षणा, अजहल्लक्षणा, लक्षितलक्षणा चेति । जहच्छब्दस्त्यागार्थकः । 'ओ हाक् त्यागे' इति धातुपाठात् ।[९]

तथा च यत्र लक्षणायां शब्दः वाक्यार्थं त्यजति सा जहल्लक्षणा । यथा 'मञ्चाः क्रोशन्ति' इत्यत्र । यत्र तु न जहाति सा अजहल्लक्षणा । यथा 'छत्रिणो यान्ति', 'काकेभ्यो दधि रक्ष्यताम्' इत्यादि । छत्र्यच्छत्रिसमुदाये काकबिडालादि दध्युपघातकत्वावच्छिन्ने चात्र लक्षणाकरणात् । शक्यार्थस्य भागमात्रत्यागे जहदजहल्लक्षणेति वेदान्तिनः । नैयायिकाः अपि केचनेमां अङ्गीकुर्वन्ति । तत्त्वमसि 'सोऽयं देवदत्तः' इत्यादौ जहदजहल्लक्षणा । शक्यार्थस्य परंपरासम्बन्धरूपा लक्षणा लक्षितलक्षणा । यथा- द्विरेफपदम् ।

लक्षितलक्षणेयं जहल्लक्षणायामेवान्तर्भवतीति नव्याः ।[१०]

---

८. मुक्ता. पृ.सं. ५८९.

९. पाणिनीयधातुपाठे १०९० तमो धातुः । पा.धा.पा.

१०. लक्षितलक्षणाया आधिक्यमाशङ्क्य जहत्स्वार्थायामेवान्तर्भावमाह--।

दिन. पृ.सं. ५९४

## न्यायसिद्धान्ते वृत्तिप्रभेदबोधिनी




आलङ्कारिकैरङ्गीकृता व्यञ्जनावृत्तिः, माध्ववेदान्तिभिर्मीमांसकैश्चाङ्गीकृता गौणी वृत्तिरपि नैयायिकैर्नाभ्युपगम्येते । व्यञ्जनाया अनुमानगतार्थत्वात् । गौण्यास्तु लक्षणायामेवान्तर्भावात् ।

शक्तिश्च जात्याकृतिविशिष्टव्यक्तौ । न तु केवलं जातौ । व्यक्तिशक्तिं विना शाब्दे व्यक्तिभानानुपपत्तेः । न वा जातिविशिष्टव्यक्तिमात्रे । आकृतेरपि शाब्दे भानात् । तदुक्तं मुक्तावल्याम्- 'तस्मात् तत्तज्जात्याकृतिविशिष्टतत्तद्व्यक्तिबोधान्यथानुपपत्त्या कल्प्यमाना शक्तिः जात्याकृतिविशिष्टव्यक्तावेव विश्राम्यति' इति ।[११]

जातिशक्तौ व्यक्तिशक्तौ आकृतिशक्तौ च प्रत्येकं युक्तयः गौतमन्यायसूत्रेषु न्यायभाष्ये च सुष्ठूपदर्शिताः ।[१२]

---

११. मुक्ता. पृ.सं. ५७६ १२. न्या.द. २.२.६२.६५

जात्याकृतिव्यक्तिषु त्रिष्वपि विद्यमाना शक्तिरेकैव। व्यक्त्याकृति-जातयस्तु पदार्थः'[१३] इति न्यायसूत्रे बहुवचनमुपेक्ष्य 'पदार्थ' इति एकवचनान्तं निविष्टवतो महर्षेः गौतमस्याप्येतदनुमतम् ॥

### २.१.२. मीमांसादर्शनम्-

स्वार्थबोधकता पदानां वृत्तिरिति भाट्टानां मतम् । पदपदार्थयोः संबन्धः वृत्तिरिति प्राभाकरास्त्वाहु; । इयं वृत्तिर्मीमांसकानुरोधं त्रिधा भिद्यते । अभिधा,लक्षणा,गौणी चेति । तदस्मिन् वृत्तिप्रभेदविषये भाट्टप्राभाकरयोः सहमतिर्विद्यते। अभिधाया एव शक्तिरिति नामान्त-रम् । एतन्मते पदानां जातावेव शक्तिः । व्यक्तौ तु शक्तिर्नास्ति अतः पदाज्जातेरेव बोधः । व्यक्तिं तु जातिराक्षिपतीति अक्षेपात्, लक्षणया वा व्यक्तिबोध इति भाट्टाः ।[१४]

जातिविशेषणतया व्यक्तेः स्मरणं बोधश्चेति प्राभाकराः ।[१५]

शक्तिग्राहकाश्चानुमानोपमानशब्दाः ।[१६] व्यवहारप्रसिद्धपद-सान्निध्यविवरणानामनुमानेऽन्तर्भावः । व्याकरणवाक्यशेषकोशानां शब्देऽन्तर्भावः। उपमानेन 'अयं गवयपदवाच्यः' इत्येवंरूपः शक्तिग्रहः।

औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः (मी.द.१.१) इति पारमर्षं सूत्रं प्रमाणयद्भिः मीमांसकैः स्वाभाविकः सञ्ज्ञासञ्ज्ञिलक्षणः,

१३. न्या.द. २.२.६६

१४. अत्र भाट्टाः। पदात् न व्यक्तेः स्मरणमनुभवो वा किन्त्वाक्षेपादेव व्यक्तिधीः...। शा.वा., पृ.सं. १८३

१५. प्राभाकरास्तु जातिशक्तिज्ञानादेव जातिप्रकारेण व्यक्तेः स्मरणं शाब्द-बोधश्च। शा.वा., पृ.सं. १९०

१६. भाट्टचिन्तामणिः, पृ.सं. ५६

वाच्यवाचकभावापराभिधानः, अर्थप्रतीतिजननसामर्थ्यपर्यवसितः सम्बन्धः अभिधेत्युपागामि। एषा शक्ति; पदार्थान्तरमिति तत्सिद्धान्तः। कार्यान्वित एवार्थे पदसामर्थ्यं न तु इतरान्विते केवले वा। कार्यान्वित एवार्थे पदानां संगतिग्रहणात् । इतरान्विते केवले वा अर्थे पदानामज्ञातसंगतित्वादिति प्राभाकराः ।[१७]

अत एव एतन्मते शक्तिर्द्विविधा । स्मारिका आनुभाविकी चेति। पदानां स्वार्थे जातौ स्मारिका शक्तिः। अन्विते चार्थे आनु-भाविकी। इयश्चान्विताभिधानशक्तिः पदानामेव न तु भाट्टानामिव पदार्थानामिति प्राभाकरः पन्थाः। अत एव प्राभाकराः अन्विताभिधान-वादिनः कथ्यन्ते[१८]। शब्दैरन्वितस्यैवाभिधानं वदन्तीति व्युत्पत्त्या।

भाट्टाः पुनः पदार्थमात्रप्रतिपादनसामर्थ्यं शब्दानामङ्गीकुर्वाणाः अभिहितानां पदार्थानामेवान्वयबोधनसामर्थ्यं प्रतिपादयन्ति । अतस्ते अभिहितान्वयवादिनः । शब्दैरभिहितानां केवलानां पदार्थानामन्वयः इति वदन्तीति व्युत्पत्त्या ।

**लक्षणा**- मीमांसकमते लक्षणा द्विविधा। अजहत्स्वार्था, जहत्स्वार्था चेति । यत्र स्वशक्यार्थोऽन्वयबोधे विशेष्यतया भासते सा अजहत्-स्वार्था ।[१९] यथा 'यष्टीः प्रवेशय' इति ।

यत्र तु स्वशक्यार्थोऽन्वयबोधे विशेष्यतया न भासते सा जहत्-

---

१७. वेदान्तपरिभाषा, पृ.सं.१३३

१८. 'प्राभाकराः पुनः तादृशान्वयस्यापि तादृशपदार्थविशेषणतया शक्यत्वं पदवाच्यत्वश्चाङ्गीकुर्वाणाः अन्विताभिधानवादिनो भवन्ति।'

मीमांसाभ्युदयः, पृ.सं. ११०

स्वार्था।[२०] यथा 'गङ्गायां घोषः'इति। अत्र हि गङ्गापदात् गङ्गाप्रवाह-रूपोऽर्थः न भासते। तीरमात्रप्रकारकबोधोऽत्र भवतीति भाट्टाः।[२१]

लक्षितलक्षणा तु जहत्स्वार्थायामेवान्तर्भवतीति भाट्टसिद्धान्तः। स्ववाच्यपदघटक-वर्णद्वयघटितपदवाच्यत्वरूपसंबन्धस्यैव द्विरेफादिपदे विवृतत्त्वात्। तथा च शक्यार्थस्य परम्परासम्बन्धरूपेयं लक्षणा जहत्स्वार्थायामेवान्तर्भवतीति तेषामाशयः। किन्तु शास्त्रदीपिकाकारेण पार्थसारथिमिश्रेण लक्षितलक्षणायाः प्रत्येकमस्तित्वमूरीकृतम्। तथाहि तेनोक्तम् 'यत्राप्यन्वितस्यैव पुनरन्वयान्तरं तत्रापि लक्षित-लक्षणा। परम्परया तस्य सर्वस्यापि सिद्धिरित्येषा दिक्' (शा.दी. १५४) इति।

लक्षणायां बीजं तु शक्यार्थान्वयानुपपत्तिः। न तु नैयायिकरीत्या तात्पर्यानुपपत्तिः। अपौरुषेयेषु वेदेषु वक्तृतात्पर्यानुपपत्तेरभावेन वेदे लक्षणासंभवप्रसङ्गात्। अस्ति हि तत्रापि लक्षणा 'वायुर्वै क्षेपिष्ठा देवता' इत्याद्यर्थवादानां वायुदेवताकयागप्राशस्त्यादौ। न च यष्टीः प्रवेशयेत्यादौ अन्वयानुपपत्तेरभावेन लक्षणानुपपत्तिरिति वाच्यम्। तत्र प्रवेशनपदस्य भोजनप्रयोजनकप्रवेनपरत्वे प्रकरणादिना ज्ञाते सति अन्वयानुपपत्तेरेवोपपादयितुं शक्यत्वात्। सर्वलाक्षणिकस्थले तु न शाब्दबोध[२२] इति भाट्टसिद्धान्तः।

**गौणी-** मीमांसकमते इयं तृतीया वृत्तिः। सादृश्यलक्षणशक्यसम्बन्धो

---

१९. स्वशक्यार्थविशेष्यकान्वयबोधप्रयोजिका अजहत्स्त्वार्था। भा.चि. पृ.५७

२०. स्वशक्यार्थाविशेष्यकान्वयबोधप्रयोजिका जहत्स्वार्था।भा.चि., पृ.सं.५७

२१. भा.चि. पृ.सं. ५८

गौणी । अर्थात् स्वशक्यसंबन्धिगुणसजातीयगुणवदुपस्थितिहेतुभूता वृत्तिः गौणीति गीयते ।[२३]

यथा 'सिंहो माणवक' इत्यत्र 'सिंह इव क्रौर्यगांभीर्यादिमान् माणवकः' इति बोधे गौणी वृत्तिः प्रयोजिका । अत्र हि स्वशक्यार्थः सिंहत्वम् । तत्सम्बन्धी गुणस्तु सिंहत्वैकार्थसमवेतो गांभीर्यक्रौर्यादिः। तत्सजातीयगुणवान् माणवक इत्युपस्थितिहेतुभूतेयं गौणीवृत्तिः । एवमेव 'योषा वाव गौतमाग्निः' इति श्रुतौ योषायामग्निशब्दो गौणः। 'खपुष्पं भवतः सिद्धान्तः' इत्यत्रापि खपुष्पसमासार्थभूतस्यालीकत्वस्य सिद्धान्ते सम्बन्धात् गौणत्वम् । इति सारः ।

## मीमांसकमते वृत्तिप्रभेदबोधिनी




२२. भा.चि., पृ.सं. ५८

२३. शक्यार्थनिष्ठगुणसजातीयगुणयोगो गौणी । तन्त्रसिद्धान्तरत्नावली, पृ.सं. ६६

### २.१.३. अद्वैतसिद्धान्तः-

अत्र सिद्धान्ते शक्तिर्लक्षणा चेति वृत्तिर्द्विविधा ।[२४] लक्षणा च द्विविधा । केवललक्षणा लक्षितलक्षणा चेति ।[२५]

प्रकारान्तरेण लक्षणा त्रिविधा । जहल्लक्षणा, अजहल्लक्षरा, जहदजहल्लक्षणा चेति ।[२६]

**शक्तिः**- एषा शक्तिः पदानामर्थेषु मुख्या वृत्तिः । पदानाञ्च शक्तिः न कार्यान्विते । नाप्यन्वितमात्रे । किन्तु केवलेऽर्थे ।[२७] शक्तिश्च पदार्थान्तरम् । न त्वीश्वरेच्छैव । शक्तेः पदार्थान्तरत्वे 'परास्य शक्तिर्विविधैव श्रूयते' 'सर्गाद्या भावशक्तयः' इत्याद्याः श्रुतिस्मृतयः प्रमाणमित्युक्तं चित्सुखाचार्यैः ।

शक्तिश्च जातावेव । व्यक्तावप्यङ्गीकारे व्यक्तीनामानन्त्येन गौरवात् ।[२८] प्रतिव्यक्तिशक्तिग्रहणे एव बह्वायुषोऽपायापत्तिश्च । ननु तर्हि शाब्दे व्यक्तिभानं कथम्? उच्यते- अत्र मतत्रयम् । नास्त्येव व्यक्तौ शक्तिः । व्यक्तिभानन्तु जातेर्व्यक्तिसमानसंवित्संवेद्यतयेति एकं मतम् । अस्ति व्यक्तावपि शक्तिः । सा स्वरूपसत्येव शाब्दबोधे

---

२४. पदार्थश्च द्विविधः । शक्यो लक्ष्यश्चेति ।
(वेदान्तपरिभाषा, आगमपरिच्छेदः, पृ.सं. २३२)

२५. वे.प., पृ.सं. २३९ पृष्ठे    २६. वे.प., पृ.सं. २४०

२७. तथा च पदनिष्ठशक्तिः केवलार्थविषयिणीत्यर्थः ।
(वेदान्तपरिभाषाटीका) मणिप्रभा, पृ.सं. २३३

२८. तादृशशक्तिविषयत्वं शक्यत्वं, तच्च जातेरेव । न व्यक्तेः ।
(वे.प., पृ.सं. २३५)

हेतुः । न तु ज्ञाता । जातौ तु ज्ञाता हेतुः । तथाच व्यक्तेरपि शक्यत्वादेव बोधे भानमिति द्वितीयं मतम् । अज्ञाता स्वरूपसती अपि शक्तिर्नास्त्येव व्यक्तौ । लक्षणयैव व्यक्तिबोधः । यथा 'नीलो घट' इत्यत्र नीलपदस्य नीलगुणविशिष्टे लक्षणा तथा जातिवाचकस्य तद्विशिष्टव्यक्तौ लक्षणेति तृतीयं मतम् । अत्र द्वितीयमते व्यक्तौ शक्तिरभ्युपगता चेदपि व्यक्तेः शक्यत्वं नास्तीत्येव सिद्धान्तः । ज्ञायमानशक्तिविषयत्वमेव शक्यत्वमित्यङ्गीकारात् ।[२०]

**लक्षणा-** शक्यसंबन्धो लक्षणा । संबन्धस्य साक्षात्त्वपारंपर्यभेदेन केवललक्षणा, लक्षितलक्षणा चेति लक्षणायां द्वैविध्यमङ्गीकृतम् । 'गङ्गायां घोषः' 'द्विरेफः' इति च क्रमेणोदाहरणे ।

लक्षितलक्षणायामेव गौणीमन्तर्भावयद्भिरद्वैतवेदान्तिभिर्गौण्याः अतिरिक्तवृत्तित्वं नाङ्गीकृतम् । यद्यपि 'सिंहो देवदत्तः' इत्यत्र गौणीवृत्तिरित्युद्घोषितं मीमांसकैः । तथापि तत्र सिंहशब्दवाच्यसिंहत्व-समानाधिकरणक्रौर्यादिसजातीयक्रौर्यवत्त्वरूपपरम्परासम्बन्धेन देवदत्त-प्रत्यायकत्वेन, शक्यार्थपरंपरासंबन्धरूपाया एव लक्षितलक्षणात्वेन गौण्यास्तस्यामेवान्तर्भावात् गौणी नातिरिक्ता वृत्तिरिति अद्वैत-सिद्धान्तः ।

पुनर्लक्षणायाः प्रकारान्तरेण त्रैविध्यमुक्तम्- जहदजहज्जहदजह-ल्लक्षणाभेदेन । शक्यमनन्तर्भाव्य यत्रार्थान्तरस्य प्रतीतिस्तत्र जहल्ल-

---

२०. ज्ञायमानशक्तिविषयत्वमेव वाच्यत्वमिति जातिरेव वाच्या ।

(वे.प., पृ.सं. २३८)

क्षणा । यथा 'विषं भुंक्ष्व' इत्यत्र स्वार्थं विहाय शत्रुगृहे भोजननिवृत्तिर्लक्षिता । यत्र शक्यार्थमन्तर्भाव्यैव अर्थान्तरप्रतीतिस्तत्राजहल्लक्षणा । यथा 'शुक्लः पट' इत्यत्र शुक्लशब्दः स्वार्थं शुक्लगुणमन्तर्भाव्यैव तद्वति द्रव्ये लक्षणया वर्तते । यत्र शक्याशक्योभयविशेष्यकप्रतीतिस्तत्र जहदजहल्लक्षणा । यथा 'काकेभ्यो दधि रक्ष्यताम्' 'छत्रिणो यान्तीत्यादिषु' । अत्र दध्युपघातकत्वस्य लक्ष्यतावच्छेदकत्वमुपादाय काकशब्दस्य शक्ये काके अशक्ये बिडालादौ च प्रवृत्तेः। छत्रिणो यान्तीत्यत्रापि छत्रिपदस्यैकसार्थवाहिषु लक्षणा । एकसार्थवाहित्वेन रूपेण शक्याशक्ययोः छत्रितदन्ययोरुभयोरपि बोधात् ।

छत्रिशब्दे लक्षणाभिधानं तु वाक्यलक्षणावादिस्वसिद्धान्ताभिप्रायेण । नैयायिकमते तु वाक्यलक्षणाया अभावात् छत्रपदस्यैवैकसार्थवाहित्वे लक्षणा । प्रत्ययार्थश्च सम्बन्धी । तथा चैकसार्थवन्तो गच्छन्तीत्यन्वयबोधः । एकसार्थवाहित्वञ्च एकसार्थ एव । न त्वेकसार्थगन्तृत्वम् । तथा सत्यस्यैव छत्रपदलक्ष्यार्थस्य नैराकाङ्क्ष्येण यान्तीत्यनेनानन्वयापत्तेः ।[30]

छत्रिणो यान्तीत्यादावेव जहदजहल्लक्षणा । न तु भाट्टनैयायिकाद्युक्तदिशा 'तत्त्वमसि', 'सोऽयं देवदत्तः' इत्यादौ । शक्त्यैव तत्र बोधोपपत्तेः । तथा हि- 'तत्त्वमसि' इत्यत्र तत्त्वंपदाभ्यामुपस्थापितयोः सर्वज्ञत्वविशिष्टचैतन्य-अन्तःकरणावच्छिन्नचैतन्ययोः सामानाधिकरण्यबोधिताभेदान्वयोऽनुपपन्नः । तावता नात्र लक्षणावकाशः । यथा हि 'घटोऽनित्यः' इत्यत्र घटपदवाच्यः घटत्वविशिष्टश्चेदपि तत्र वाच्यार्थैक-

३०. दिन., शब्दखण्डः ।

हेतुः । न तु ज्ञाता । जातौ तु ज्ञाता हेतुः । तथाच व्यक्तेरपि शक्यत्वादेव बोधे भानमिति द्वितीयं मतम् । अज्ञाता स्वरूपसती अपि शक्तिर्नास्त्येव व्यक्तौ । लक्षणयैव व्यक्तिबोधः । यथा 'नीलो घट' इत्यत्र नीलपदस्य नीलगुणविशिष्टे लक्षणा तथा जातिवाचकस्य तद्विशिष्टव्यक्तौ लक्षणेति तृतीयं मतम् । अत्र द्वितीयमते व्यक्तौ शक्तिरभ्युपगता चेदपि व्यक्तेः शक्यत्वं नास्तीत्येव सिद्धान्तः । ज्ञायमानशक्तिविषयत्वमेव शक्यत्वमित्यङ्गीकारात् ।[२९]

**लक्षणा-** शक्यसंबन्धो लक्षणा । संबन्धस्य साक्षात्त्वपारंपर्यभेदेन केवललक्षणा, लक्षितलक्षणा चेति लक्षणायां द्वैविध्यमङ्गीकृतम् । 'गङ्गायां घोषः' 'द्विरेफः' इति च क्रमेणोदाहरणे ।

लक्षितलक्षणायामेव गौणीमन्तर्भावयद्भिरद्वैतवेदान्तिभिर्गौण्याः अतिरिक्तवृत्तित्वं नाङ्गीकृतम् । यद्यपि 'सिंहो देवदत्तः' इत्यत्र गौणीवृत्तिरित्युद्घोषितं मीमांसकैः । तथापि तत्र सिहंशब्दवाच्यसिंहत्व-समानाधिकरणक्रौर्यादिसजातीयक्रौर्यवत्त्वरूपपरम्परासम्बन्धेन देवदत्त-प्रत्यायकत्वेन, शक्यार्थपरंपरासंबन्धरूपाया एव लक्षितलक्षणात्वेन गौण्यास्तस्यामेवान्तर्भावात् गौणी नातिरिक्ता वृत्तिरिति अद्वैत-सिद्धान्तः ।

पुनर्लक्षणायाः प्रकारान्तरेण त्रैविध्यमुक्तम्- जहदजहज्जहदजह-ल्लक्षणाभेदेन । शक्यमनन्तर्भाव्य यत्रार्थान्तरस्य प्रतीतिस्तत्र जहल्ल-

---

२९. ज्ञायमानशक्तिविषयत्वमेव वाच्यत्वमिति जातिरेव वाच्या ।

(वे.प., पृ.सं. २३८)

क्षणा । यथा 'विषं भुंक्ष्व' इत्यत्र स्वार्थं विहाय शत्रुगृहे भोजन-निवृत्तिर्लक्षिता । यत्र शक्यार्थमन्तर्भाव्यैव अर्थान्तरप्रतीतिस्तत्रा-जहल्लक्षणा । यथा 'शुक्लः पट' इत्यत्र शुक्लशब्दः स्वार्थं शुक्लगुण-मन्तर्भाव्यैव तद्वति द्रव्ये लक्षणया वर्तते । यत्र शक्याशक्योभय-विशेष्यकप्रतीतिस्तत्र जहदजहल्लक्षणा । यथा 'काकेभ्यो दधि रक्ष्यताम्' 'छत्रिणो यान्तीत्यादिषु' । अत्र दध्युपघातकत्वस्य लक्ष्यतावच्छेद-कत्वमुपादाय काकशब्दस्य शक्ये काके अशक्ये बिडालादौ च प्रवृत्तेः। छत्रिणो यान्तीत्यत्रापि छत्रिपदस्यैकसार्थवाहिषु लक्षणा । एकसार्थ-वाहित्वेन रूपेण शक्याशक्ययोः छत्रितदन्ययोरुभयोरपि बोधात् ।

छत्रिशब्दे लक्षणाभिधानं तु वाक्यलक्षणावादिस्वसिद्धान्ताभि-प्रायेण । नैयायिकमते तु वाक्यलक्षणाया अभावात् छत्रपदस्यैवैक-सार्थवाहित्वे लक्षणा । प्रत्ययार्थश्च सम्बन्धी । तथा चैकसार्थवन्तो गच्छन्तीत्यन्वयबोधः । एकसार्थवाहित्वञ्च एकसार्थ एव । न त्वेक-सार्थगन्तृत्वम् । तथा सत्यस्यैव छत्रपदलक्ष्यार्थस्य नैराकाङ्क्ष्येण यान्तीत्यनेनानन्वयापत्तेः ।[30]

छत्रिणो यान्तीत्यादावेव जहदजहल्लक्षणा । न तु भाट्टनैयायिकाद्युक्त-दिशा 'तत्त्वमसि', 'सोऽयं देवदत्तः' इत्यादौ । शक्त्यैव तत्र बोधोप-पत्तेः । तथा हि- 'तत्त्वमसि' इत्यत्र तत्त्वंपदाभ्यामुपस्थापितयोः सर्वज्ञत्वविशिष्टचैतन्य-अन्तःकरणावच्छिन्नचैतन्ययोः सामानाधिकरण्य-बोधिताभेदान्वयोऽनुपपन्नः । तावता नात्र लक्षणावकाशः । यथा हि 'घटोऽनित्यः' इत्यत्र घटपदवाच्यः घटत्वविशिष्टश्चेदपि तत्र वाच्यार्थैक-

३०. दिन., शब्दखण्डः ।

देशे घटत्वेऽनित्यत्वान्वयो न संभवति । न तावता तत्र लक्षणा स्वीकृता । किन्तु अनित्यत्वान्वयायोग्यं वाच्यार्थैकदेशं घटत्वं परित्यज्य योग्यघटव्यक्त्या साकमनित्यत्वान्वयः सर्वसम्मतः । तथैव 'तत्त्वमसि' इत्यत्रापि शक्त्युपस्थापितयोर्विशिष्टयोरभेदान्वयानुपपत्तौ विशेष्ययोः शक्त्युपस्थापितयोरेवान्वयबोधाङ्गीकारे बाधकाभावः । यत्तु जहदजहल्लक्षणया तत्त्वमसीत्यादौ बोध इत्यद्वैताचार्यैः प्रतिपादितं तत् सांप्रदायिकानां मतम् । आधुनिकास्तु तत्त्वमस्यादिवाक्ये लक्षणां नाभ्युपगच्छन्तीति तु तत्त्वम् ।

यद्यप्यद्वैतादिसद्धान्ते जहदजहल्लक्षणैवान्ततो नास्ति । 'काकेभ्यो दधि रक्ष्यताम्' इत्यादावजहल्लक्षणयैव निर्वाहात् । तथा च लक्षणा द्विविधैव । जहत्स्वार्था, अजहत्स्वार्था चेति । तदुक्तं शिखामणिटीकायां रामकृष्णाध्वरिणा 'सिद्धान्ते च जहदजहल्लक्षणाया एवासिद्धेः । लक्षणात्रैविध्यस्य च मतान्तराभिप्रायकत्वात्' इति ।[३१]

**अद्वैतसिद्धान्तवृत्तिप्रभेदबोधिनी**




३१. शिखामणिटीका (वे.प), पृ.सं. २४१

लक्षणायां बीजन्तु तात्पर्यानुपपत्तिरेव नत्वन्वयानुपपत्तिः । यष्टीः प्रवेशयेत्यादौ कथञ्चिदन्वयानुपपत्तेः संभवेऽपि 'काकेभ्यो दधि रक्ष्यतामि'त्यादौ तदसंभवेन लक्षणानुपपत्तेः । यत्र त्वन्वयानुपपत्तिर्गङ्गायां घोष इत्यदौ तत्रापि तात्पर्यानुपपत्तिर-स्त्येव । अतस्तात्पर्यानुपपत्तिरेव लक्षणाबीजम् ।[३२]

नैयायिकाः खलु लक्षणा पदमात्रनिष्ठा, न तु वाक्यनिष्ठा, वाक्ये शक्तेरभावेन शक्यसंबन्धरूपलक्षणाया अप्ययोगादित्याहुः । प्रमाण-मप्यत्रोदाहरन्ति-लक्षणा पदमात्रवृत्तिः,वृत्तित्वात्, शक्तिवत्, इति । अत एव 'गभीरायां नद्यां घोष' इत्यत्र नदीपदस्यैव गभीरनदीतीरे लक्षणा, गभीरपदं तात्पर्यग्राहकमिति तर्कराद्धान्तः । परन्तु नैतत्सहन्ते अद्वैततत्वनिपुणाः ।[३३]

वाक्येऽपि लक्षणा अङ्गीक्रियते । वृत्तित्वानुमानन्तु सोपाधिकत्वाद् व्याप्यत्वासिद्धम् । शक्तित्वञ्चोपाधिः । न च पदमात्रवृत्तित्वस्य पदत्वे सत्त्वेन शक्तित्वस्य च तत्राभावेन साध्याव्यापकत्वात्कथमयमुपाधिरिति वाच्यम् । साधनावच्छिन्नसाध्यव्यापकत्वस्य विवक्षितत्त्वात् ।

ननु तथापि वाक्ये शक्त्यभावेन शक्यसम्बन्धरूपलक्षणाया अपि तत्रायोग इति चेन्न । शक्यसम्बन्ध एव हि लक्षणा । शक्यश्च स एव यः स्वशक्तिज्ञाप्यः । शक्तिज्ञाप्यश्च पदार्थद्वारा वाक्यार्थोऽपि । तथा च शक्तिज्ञाप्यसम्बन्धस्यैव लक्षणात्वेन[३४] वाक्यार्थस्यापि शक्तिज्ञाप्यत्वेन

३२. लक्षणाबीजन्तु तात्पर्यानुपपत्तिरेव । (वे.प., पृ.सं. २४३)

३३. लक्षणा तु न पदमात्रवृत्तिः । किन्तु वाक्यवृत्तिरपि ।(वे.प., पृ.सं. २४३)

३४. शक्त्या यत्पदसम्बन्धेन ज्ञाप्यते तत्संबन्धो लक्षणा । (वे.प., पृ.सं. २४४)

वाक्यार्थसम्बन्धस्य च वाक्ये विद्यमानत्वेन वाक्यलक्षणाङ्गीकारे न काचिदनुपपत्तिरित्यद्वैतसिद्धान्तः ।

### २.१.४. वैयाकरणसिद्धान्तः-

वैयाकरणास्तु त्रिविधां वृत्तिमूरीकुर्वन्ति । शक्तिर्लक्षणा व्यञ्जना चेति ।[३५]

शक्तिश्च रूढिर्योगो योगरूढिश्चेति त्रिधा भिद्यते । लक्षणा तु गौणी शुद्धा चेति द्विविधेति तेषां सिद्धान्तः ।

**शक्तिः-** ईश्वरेच्छैव शक्तिः । न पुनः पदार्थान्तरम् । तत्रापि 'अस्माच्छब्दात् अयमर्थो बोद्धव्यः' 'अयमर्थः एतच्छब्दबोध्यो भवतु' इति वेश्वरेच्छाकारस्तार्किकाभिमतः । वैयाकरणास्तु 'इदं पदमिममर्थं बोधयतु' इत्याकारकत्वमिच्छायाः सञ्जगदिरे । पूर्वोक्तेच्छा-द्वयपरित्यागे बीजं तु तयोर्बोध्यत्वप्रकाररूपेच्छात्वेनार्थधर्मत्वापत्त्या पदधर्मत्वाभावप्रसङ्ग इत्यरुचिरेव ।[३६]

शक्तिग्राहकश्च न केवलं व्याकरणोपमानादि । सङ्केतापरपर्यायमितरेतराध्यासमूलं तादात्म्यमपि । अन्यस्मिन्नन्यधर्मावभासोऽध्यासः । तन्मूलकमेव पदपदार्थयोस्तादात्म्यं सङ्केत इत्युच्यते । न तु वास्तवम् ।

---

३५. सा च वृत्तिस्त्रिधा । शक्तिर्लक्षणाव्यञ्जना चेति ।
(वैयाकरणसिद्धान्तमञ्जूषा, पृ.सं. २१)

३६. ननु बोध्यत्वप्रकारकेच्छायाः शक्तित्वेऽर्थधर्मत्वापत्तिरित्यरुचेराह- इदं पदमिति । (वै.सि.मं.टीका (कुञ्चिका), पृ.सं. २१)

तदुक्तं पातञ्जलभाष्ये- 'सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको योऽयं शब्दः सोऽर्थो योऽर्थः स शब्द इति' इति ।[३७]

इतरेतराध्यासरूप इत्यस्य इतरेतराध्यासकारणक इत्यर्थः । इतरेतराध्यासो रूप्यतेऽनेनेति करणे घञ् ।

ननु शब्दार्थयोरितरेतराध्यासे किं मानमिति चेदुच्यते । कः शब्दः? कोऽर्थः? इति प्रश्ने 'घट इत्ययं शब्दः' 'घटइत्ययमर्थः' इत्येकाकारोत्तरदर्शनात् शब्दार्थयोरध्याससिद्धिः । 'पदं श्रुतम्, इदानीं पदार्थं श्रुणु' 'अर्थं वदति' इत्याद्यस्ति व्यवहारः । श्रोत्रेण विषयीकरणमेव हि श्रवणम् । वाचा व्यक्तीकरणमेव च वदनम् । 'वद व्यक्तायां वाचि' इति धातुपाठात् । इदं श्रवणं वदनञ्च शब्दस्यैव युज्यते न त्वर्थस्य । अतः शब्दार्थयोरध्यासादेवायं व्यवहारः । 'ओमित्येकाक्षरं ब्रह्म' 'वृद्धिरादैच्' इत्यादिशक्तिग्राहकश्रुतिस्मृत्योः सामानाधिकरण्येन प्रयोगोऽपि शब्दार्थयोरितरेतराध्यासादेव । अयमेवाध्यासो वैयाकरणैः सङ्केत इत्याहूयते ।

तार्किकास्तु सङ्केतस्य शक्तित्वमङ्गीचक्रुः । वैयाकरणाः पुनः पदनिष्ठशक्त्युपकारकत्वात् सङ्केतस्य शक्तिरिति व्यवहारमात्रम्, न तु शक्तिरेव सः, भेदाभेदरूपस्य तस्य संबन्धत्वासंभवादित्याचक्षते ।

इदमत्र चिन्तयामः । शब्दर्थयोर्नाभेदः स्वीकर्तुं शक्यः । तथा सत्यग्न्यादिशब्दोच्चारणे मुखदाहाद्यापत्तिः । 'तस्यायं वाचकः' इति व्यवहारानापत्तिश्च । नाप्यत्यन्तभेदः । 'ओमिति ब्रह्म' घट इत्य-

३७. पातञ्जलभाष्यम् - पस्पशाह्निकम् ।

यमर्थः' इत्यादिव्यवहारविरोधात् । न ह्यत्यन्तभेदे सामानाधिकरण्य-व्यवहारोऽस्ति 'घटः पटः', 'घट इति पटः' इति वा व्यवहारा-भावात् । किञ्च शब्दार्थयोरत्यन्तभेदे सति 'अर्थं वदति', 'पदार्थं शृणु' इत्येवं रीत्या अर्थे शब्दधर्मवत्ताव्यवहारोऽप्यनुपपन्नः स्यात् । अतोऽत्यन्ताभेदस्य अत्यन्तभेदस्य वासंभवात् तयोस्तादात्म्यं स्वी-कृतम् । तादात्म्यञ्च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम् । तदुक्तं भेदाभेदरूपमिति । अभेदस्याध्यस्तत्त्वाच्च न भेदाभेदयोर्विरोधः ।

एते च वैयाकरणाः स्फोटवादिनः । वर्णानां वाचकत्वासम्भवात् वर्णाभिव्यङ्ग्यः स्फोट एव वाच्यो वाचकश्चेति तत्सिद्धान्तः । तथा हि- वर्णानामेव वाचकत्ववादिभिरिदमत्र वक्तव्यं भवति किं वर्णाः व्यस्ता अर्थं प्रतिपादयन्ति, उत समस्ताः? इति । न तावद्व्यस्ताः । एकैकवर्ण-श्रवणेऽप्यर्थप्रतीतिप्रसङ्गात् । द्वितीयादिवर्णोच्चारणस्य व्यर्थप्रयासता-पत्तेश्च । ननु प्रथमवर्णश्रवणेऽस्पष्टं प्रतीयमानोऽपि पदार्थो द्वितीयादि-वर्णश्रवणे स्पष्टं स्पष्टतरं च प्रतीयते ; यथा रत्नपरीक्षकाणां प्रथमदर्शने स्फुटमप्रकाशमानमपि रत्नतत्त्वं पुनः पुनः परीक्षमाणानां तेषां चरमे दर्शने निरवद्यं रत्नतत्त्वं चकास्ति, एवमिहापि प्रथमवर्णश्रुतावव्यक्तगम्येऽर्थे व्यक्ततरप्रतीत्यै वर्णान्तराणि प्रयुज्यन्त इति चेत् न । एवञ्चेत् भूप-धूपसूपकूपादौ अर्थान्तरप्रतीतिर्निर्निबन्धना स्यात् । तथा हि- भूपेत्यत्र भकारेण प्रतीयमानोऽपि राजा ऊकारेण पकारेण च यदि स्पष्टतरं प्रत्याय्यत इत्युच्यते तर्हि ऊकारपकारयो राजबोधकत्वमुक्तं स्यात् । तदा धूपेत्यत्रापि ऊकारपकाराभ्यां राजप्रतीतिः स्यात्, एवं सूप-कूपादावपीति महद्दौर्घट्यमापद्येत ।

नापि समस्ता इति द्वितीयः पक्षः । वर्णानां सामस्त्यस्यैवासम्भवात् । नैयायिकानां मते वर्णानामाशुविनाशितयोत्पन्नविनष्टानां क्रमभाविनां वर्णानां सामस्त्यं दुर्वचम् । मीमांसकानां यद्यपि नित्या वर्णाः, तैः सत्तामात्रेण वर्णानां प्रत्यायकत्वे सर्वदा सर्वार्थप्रतीत्यापत्त्या चक्षुरादीनामिव न तेषां सत्तामात्रेणार्थावबोधकत्वं, किन्तु धूमादीनामिव गृहीतानामेव तथात्वमिति वक्तव्यम् । ग्रहणञ्च तेषां श्रावणप्रत्यक्षाधीनमिति प्रयत्नस्थानकरणैः क्रमेणोच्चरितानामेवेति वक्तव्यम् । तथा च द्वितीयवर्णोच्चारणकाले प्रथमवर्णोच्चारणहेतुभूतप्रयत्नादीनां विनाशात् तदुच्चारणस्यापि नाशावश्यम्भावात् न कथङ्कारमपि तेषां ग्रहणे सामस्त्यं शक्यप्रतिपादनम् । तदुक्तं महाभाष्ये- यावत् गकारे वाक् वर्तते न तावदौकार इति येनैव यत्नेनैको वर्ण उच्चार्यते तेनैव विच्छिन्ने तस्मिन् वर्णे उपसंहृत्य तं यत्नमन्यं यत्नमुपादाय द्वितीयः प्रयुज्यते तथा तृतीयस्तथा चतुर्थः[३८] । इति ।

ननूच्चारणस्य नष्टत्वेऽपि पूर्वपूर्ववर्णानुभवजनितसंस्कारसचिवोऽन्त्यवर्णग्रह एव प्रत्यायक[३९] इति चेत्- तदप्ययुक्तम् । संस्कारो हि स्मृतिमात्रजनने निहितसामर्थ्यः । नत्वर्थप्रतीतिजननेऽपि । अतोऽत्र पूर्वपूर्ववर्णानुभवजनितः संस्कारो हि यदनुभवजनितः सः तद्विषयकं स्मरणमेव जनयेत्, न पुनरर्थप्रतीतिमपि । ननु सत्यं यदुक्तं संस्कारस्य स्मृतिजननसामर्थ्यं व्यवस्थितमिति ; किन्तु स्मृतिमात्रजननसामर्थ्यं तस्येति तु असदुक्तम् । संस्काराणां स्मृतिजननसामर्थ्यवत् अर्थप्रतीतिजनकत्वस्याप्यनुभवसिद्धत्वात् । तदुक्तम्- 'यद्यपि स्मृतिहेतुत्वं संस्कारस्य

३८. म.भा., १-४-१०९ ३९. शा.भा., १-१-१

व्यवस्थितम् । अर्थान्तरेषु सामर्थ्यं न तस्य प्रतिषिध्यते ।'[४०] इति । इति चेत्- मैवम् । प्रतिज्ञामात्रस्य वस्तुशक्त्यन्यथाकरणसामर्थ्याभावात् । न हि 'घृतबिन्दोः प्रदीप्ताग्निनाशनसामर्थ्यं न प्रतिषिध्यते' इति प्रतिज्ञामात्रेण तत्सामर्थ्यमङ्गीकर्तुं प्रभवेम ।

ननु त्यज्यतां नाम वर्णानामर्थप्रतीतिजननसामर्थ्यम् । स्मृतिजनन-सामर्थ्यन्तूरीकृतं खलु ! तावतैवाभीष्टसिद्धेः । पूर्वपूर्ववर्णस्मृत्या सहितस्यान्तिमवर्णग्रहस्यैवार्थप्रत्यायकत्वाङ्गीकारादिति चेत् - तदपि न। अन्त्यवर्णग्रहसमये पूर्ववर्णसंस्कारैः वर्णस्मृतिर्नोत्पन्ना, उत्पन्नायाश्च स्मृतौ अन्त्यवर्णग्रह एवोपरत इति वर्णस्मृतिसहितोऽन्त्यवर्णग्रह इति कल्पनाया एवालीकत्वात् ।

न च पूर्वपूर्ववर्णानुभवजनितसंस्काररूपसहकारिबलात् अन्त्यवर्ण-सन्निकृष्टं तेषां श्रोत्रं सदसद्वर्णविषयकमेकं ज्ञानं जनयति तदेव च प्रत्यायकमित्यदोष[४१] इति वाच्यम् । विचारासहत्वात् । नहीन्द्रियमतीत-वर्णग्रहणसमर्थम् । असन्निकृष्टस्य ग्राहकत्वेऽतिप्रसङ्गेन सन्निकृष्टस्यैव ग्राहकत्वावश्यम्भावेनातीतेन च सन्निकर्षायोगेनेन्द्रियस्यातीतवर्ण-ग्राहकत्वायोगात् । न वा संस्कारो वर्तमानवर्णग्राहीति अतीतमात्रग्राहकः संस्कारः वर्तमानमात्रग्राहकमिन्द्रियञ्च युगपदेकां बुद्धिं जनयितुं कथं प्रभवेताम् ?

---

४०. श्लो.वा., पृ.सं. ५३६

४१. 'यद्वा प्रत्यक्षतः पूर्वं क्रमज्ञातेषु यत्परम् ।
समस्तवर्णविज्ञानं तदर्थज्ञानकारणम् ॥' (श्लो.वा., पृ.सं. ५३८)

ननु मास्तु नाम पूर्वर्णानुभवजनितसंस्कारसहितेनान्त्यवर्णप्रत्यक्षेणार्थप्रत्ययः, तथाऽप्येवं स्यात्- अन्त्यवर्णानुभवनाशानन्तरं तद्विषयकसंस्कारेण, पूर्ववर्णसंस्कारैश्च मिलितैः स्मृतिरेका समुदेति। तस्याश्च सर्वे वर्णाः प्रतिभान्तीति तैर्वर्णैरेवार्थप्रतीतिः सम्भाव्यत इति चेत्- न। प्रमाणाभावात्, प्रतीतिविरोधाच्च। पूर्ववर्णसंस्कारैः समग्रवर्णविषयिण्येका स्मृतिः कस्यचिद्भवतीत्यत्र न हि किञ्चित्प्रमाणमस्ति। नाप्येवमनुभवोऽस्ति कस्यचित्। विरुध्यते चायमनुभवेन। यतो हि गोपदश्रवणसमनन्तरक्षण एव जायमाना गोपदार्थावगतिः मध्ये स्मृतिजननविलम्बं न क्षमते। तस्मात् सर्वथा वर्णानामनुपपद्यमानं वाचकत्वं वर्णेभ्योतिरिक्तं स्फोटमङ्गीकारयति।

किञ्च वर्णानामेव वाचकत्वे 'शब्दादर्थं प्रतिपद्यामहे' इति सर्वानुभवसिद्धा प्रतीतिर्नोपपद्येत। वर्णानां बहुत्वेन शब्दादित्येकवचनप्रतिपादितैकत्वस्य बाधितत्वात्। एवमेव 'एकं पदम्', 'एकं वाक्यम्' इत्यादि स्फोटमन्तरा नोपपादयितुं शक्यते। तथा चैकं पदमित्यादि प्रयोगोऽपि स्फोटमन्यथा अनुपपद्यमानं स्फोटाख्यं शब्दतत्त्वं कल्पयिष्यति।

ननु वर्णानामेवार्थप्रत्यायकत्वे अन्वयव्यतिरेकौ स्तः। वर्णश्रवणेऽर्थप्रतीतिः, तदभावे तदभाव इति। तत्कथं प्रमाणसिद्धप्रत्यायकत्वप्रत्याख्यानमिति चेत्, अत्राहुः- सत्यं वर्णेषु सत्स्वेवार्थप्रतीतिर्नान्यथेति। न तावता वर्णानामर्थप्रत्यायकत्वसिद्धिः। वर्णानां स्फोटव्यञ्जकत्त्वेनापि उक्तान्वयव्यतिरेकयोरुपपत्तेः। यथा हि उच्चारणान्वयव्यतिरेकानुविधायित्वस्य वर्णेषु सत्त्वेऽपि वर्णव्यञ्जकध्वनिजनकत्वेनैवान्वयव्यतिरेकयोः गतिः प्रकल्पिता तद्वदत्रापि।

कण्ठताल्वाद्यभिघातजन्याः वर्णाः स्फोटं व्यञ्जयन्ति। स्फोटस्य च द्विधा व्युत्पत्तिः सम्प्रदायसिद्धा। स्फुटत्यर्थोऽस्मादिति स्फोटः, स्फुटयते वर्णैरिति स्फोट इति च। प्रथमव्युत्पत्तौ वाचक इत्यर्थः। द्वितीयव्युत्पत्तौ व्यङ्ग्य इत्यर्थः। अस्मिंश्च स्फोटे यद्यप्यष्टौ पक्षाः निरूपिताः नागेशभट्टेन स्फोटवादे। तेष्वष्टपक्षेषु वाक्यजातिस्फोट एव मुख्यः। तदुक्तं कौस्तुभे- 'यद्यपीहाष्टौ पक्षा उक्तास्तथापि वाक्यस्फोटपक्षे तात्पर्यं ग्रन्थकृताम्। तत्रापि जातिस्फोट इत्यवधेयम्' इति[४२]।

स चायं स्फोट एक एव। विभुर्नित्यश्च। कत्वादिविशेषाः न सन्त्येव। प्रतीतिस्तु कत्वादीनां व्यञ्जकभूतैर्वर्णैर्ध्वनिभिर्वा कृता।

अयञ्च स्फोटः प्रणवरूपः। तस्यैव च मुख्यं वाचकत्वम्, इति वैयाकरणसिद्धान्तः।

### २.१.४.१. वैयाकरणमते शक्तिप्रभेदाः-

वैयाकरणानुसारं शक्तिस्त्रिविधा। रूढिर्योगो योगरूढिश्च। नूपुर-शब्दस्य मञ्जीरे रूढिः। पाचकशब्दस्य पाककर्तरि योगः। पङ्कजशब्दस्य पङ्कजनिकर्तरि पद्मे योगरूढिः। अश्वगन्धपदम् औषधिविशेषे रूढम्, अश्वसम्बन्धवत्तया वाजिशालाबोधे यौगिकम्। इदं यौगिकरूढमित्यु-च्यते। यौगिकरूढिरिति शक्तौ चतुर्थः प्रभेदस्तु न स्वीकृतः। योग-रूढिभ्यामेवार्थद्वयबोधोपपत्तेः। ननु 'रूढिर्योगापहारिणी' इत्यभि-युक्तोक्त्या कथं रूढशब्दे योगेनापि बोध इति चेत्- अनुभवात्। 'संविदेव हि भगवती विषयसत्त्वे नः शरणम्' इति न्यायात्। 'रूढिर्योगाप-

४२. श.कौ., पृ.सं. ११

हारिणी' इति तु प्रकरणाद्यभावे सत्त्येवेति ध्येयम्। नानार्थशब्देषु त्वेकस्यैव शब्दस्य रूढिर्नानेत्येकः पक्षः। अर्थ-भेदाच्छब्दभेद इति शब्दस्यैकस्य एकत्रैव रूढिरित्यपरः पक्षः।

## २.१.४.२. नानार्थशब्देष्वर्थनियामकाः -

ननु 'हरिर्वैकुण्ठे' 'वज्रधरो हरिः' 'हरेर्गर्जितम्' इत्यादौ नानार्थके विष्णिवन्द्र-सिंहादीनां बोधो भवति। यत्र वाक्ये हरिशब्देन विष्णुबोधः न तत्र सिंहबोधः। यत्र तु सिंहबोधः हरेर्गर्जितमित्यादौ न तत्र विष्णुबोध इत्यस्त्यनुभवः। तत्र किं नियामकमिति चेत् संयोगादय इति ब्रूमः। भर्तृहरिस्तु नानार्थकेषु शब्दार्थसन्देहे सति तदपाकरणद्वारा अर्थनिर्णय-हेतुभूतान् संयोगादीन् चतुर्दशांशान् निर्दिदेश[४३]। ते चोपास्थिताना-मनेकेषामर्थानां मध्ये एकमात्रतात्पर्यनिर्णयद्वारा तन्मात्रविषयकान्वय-बोधजनका भवन्ति।

**संयोगः**- 'सवत्सा' इत्युक्ते वत्ससंयोगात् धेनोरेव बोधः।

**विप्रयोगः**- 'अवत्सा' इत्युक्ते निषेधस्य प्राप्तिपूर्वकत्वात् विप्रयोगाद्धेतोः धेनुबोधनियमनम्। यद्वा 'सवत्सा धेनुः' 'अवत्सा धेनुः' इत्यत्र क्रमेण संयोगविप्रयोगाभ्यां धानकारकस्त्रीव्यक्तिमात्रबोधकस्य धेनुशब्दस्य गौरित्यर्थो नियम्यते।

---

४३. संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः।
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥ (वाक्यपदीयम्)

**साहचर्यम्-** 'रामः' इत्युक्ते किं दाशरथिः? उत भार्गवः? आहो कृष्णाग्रजः? इति सन्देहे साहचर्येणार्थनिर्णयः। तथा हि रामलक्ष्मणौ इत्यत्र लक्ष्मणसाहचर्येण रामशब्दस्य दाशरथिरित्यर्थो नियम्यते रामकृष्णावित्यत्र तु कृष्णाग्रजे। यद्यपि रामलक्ष्मणावित्यत्र लक्ष्मणोऽपि कौरवपुत्रः, राघवानुजश्चेति साहचर्येण प्रथमं कस्यार्थनियमनमित्येवं भवत्यन्योन्याश्रयशङ्का तथाऽपि साहचर्येणोभयोर्युगपदेवार्थनियमनमिति न दोषः।

**विरोधिता-** 'रामार्जुनगतिस्तयोः' इत्यत्र रामो भार्गवः। अर्जुनश्च कार्तवीर्यः। तयोरेव विरोधित्वात्।

**अर्थः-** 'अञ्जलिना जुहोति' 'अञ्जलिना सूर्यमुपतिष्ठते' इत्यत्र जुहोत्यादिपदार्थ-वशादञ्जलिशब्दस्य तत्तदाकाराञ्जलिपरत्वम्।

**प्रकरणम्-** 'सैन्धवमानय' इत्यत्र, लवणाश्वादिनानार्थकादपि सैन्धव-शब्दात् भोजनप्रकरणे अश्वबोधो न भवति। युद्धप्रकरणे तु लवणबोधो न भवति। प्रकरणेनात्रार्थनियमनम्।

**लिङ्गम्-** संयोगातिरिक्तसम्बन्धेन सम्बद्धो व्यावर्तकधर्मो लिङ्गम्। 'कुपितो मकरध्वजः' इत्यत्र मकरध्वजः किं समुद्रः उत कामः? इति सन्देहे समुद्रे कोपासम्भवात् कोपेन लिङ्गेन कामे अर्थो नियम्यते।

**शब्दान्तरसन्निधिः-** 'रामो जामदग्न्यः' इत्यत्र जामदग्न्यपदसन्निधानेन 'रामः परशुरामः' इति निर्णयः।

**सामर्थ्यम्-** 'अभिरूपाय कन्या देया' इत्यत्राभिरूपतरायेति अर्थ-प्रतीतिस्तु सामर्थ्यात्।

**औचित्यम्**- 'निम्बं परशुना' इत्यत्रौचित्यात् परशुनेत्यस्य छेदनार्थत्वम्।

**देशः**- 'भात्यत्र परमेश्वरः' इति राजधान्यामुक्तश्चेत् परमेश्वरपदं राजबोधकम्। वाराणस्यां तथोक्तश्चेत्तदा परमेश्वरपदं पार्वतीशं बोधयति। देश एवात्रार्थं नियमयति।

**कालः**- वह्निसूर्योभयार्थकश्चित्रभानुशब्दः। 'चित्रभानुर्विभाति' इत्यत्र रात्रिकाले वह्निबोधः, दिवा तु सूर्यबोधः। अत्र कालोऽर्थनियामकः।

**व्यक्तिः**- व्यक्तिर्नाम स्त्रीपुरुषादिलिङ्गम्। 'मित्रो भाति' 'मित्रं भाति' इत्यत्राद्ये सूर्योऽन्त्ये सुहृत्। मित्रशब्दो हि पुंसि सूर्यं वक्ति। क्लीबे तु सुहृदम्।

**स्वरः**- 'स्थूलपृषतीमानय' इत्युक्ते स्थूला पृषतीति कर्मधारयार्थो वा? स्थूलानि प्रषन्ति यस्या इति बहुव्रीह्यर्थो वेति सन्देहे पूर्वपदप्रकृतिस्वरात् बहुव्रीह्यर्थनिर्णयः।

**षत्वणत्वादिः**- षत्वणत्वादीन्यपि अर्थतात्पर्यनिर्णायकानि। तानि च भर्तृहरिणा आदिपदेन सूचितानि। सुसिक्तमित्यत्र पूजार्थः सुः। सुषिक्तमित्यत्र तु न तथा। तथा हि- 'सुः पूजायाम्' इति पूजार्थकः सुः कर्मप्रवचनीयो भवति। कर्मप्रवचनीयसंज्ञा च गत्युपसर्गसंज्ञापवादः। तथा चोपसर्गसंज्ञाभावेन 'उपसर्गात्सुनोति...' इत्यादेरप्रवृत्त्या षत्वाभावे सुसिक्तमित्यनेन समीचीनं सेचनमिति पूजा द्योत्यते। 'सुषिक्तं किमनेन!? इत्यत्र तु गर्हा द्योत्यते। अत एव सोः पूजार्थत्वाभावात् 'सुः पूजायामित्यस्याप्रवृत्तेः कर्मप्रवचनीयसंज्ञाभावे उपसर्गात्सुनोतीत्यादिना

षत्वम् । एवं सुसिक्तं, सुषिक्तमित्यादौ, षत्वेनार्थविशेषनिर्णयः । प्रनायकप्रणायकेत्यादौ प्रणायकशब्दस्य प्रणयनकर्त्रर्थकत्वनिर्णयः । णत्वात् । प्रनायकशब्देन तु प्रगतनायकदेशबोधः ।

**२.१.४.३. लक्षणा -**

सर्वेषां सर्वार्थवाचकत्वं स्फोटवादिनां मतम् । 'सर्वः सर्वार्थवाचकः' इति तदुक्तेः । ननु तर्हि लक्षणोच्छेदप्रसङ्गः गङ्गाशब्दस्य तीरवाचकत्वेनैव तीरबोधोपपत्तेः इति चेत् सत्यम् । तथाऽपि योगिनां सर्वार्थवाचकत्वज्ञाने सत्यपि अस्मदादीनां तदभावात् लक्षणोपयोगः[४४] ।

तात्पर्यानुपपत्तिरेव लक्षणाबीजम् । अन्वयानुपपत्तिश्चेल्लक्षणाबीजं तदा 'गङ्गायां घोषः' इत्यत्र घोषशब्दस्य मकरादिलाक्षणिकत्वेऽपि अन्वयानुपपत्तिपरिहारेण गङ्गाशब्दस्यैव तीरलाक्षणिकत्वमिति न स्यात् । अतः वक्तृतात्पर्यानुगुणं गङ्गाशब्दस्य लक्षणेत्यविवादः ।

लक्षणा च द्विविधा । गौणी शुद्धा च । प्रकारान्तरेणापि सा द्विविधा । अजहत्स्वार्था जहत्स्वार्था च । तत्स्वरूपादिकं पूर्ववदेव ।

**निरूढलक्षणा**- 'त्वचा ज्ञातम्' चक्षुषा ज्ञातम्' इत्यादौ त्वगादिशब्दानां त्वगिन्द्रियादौ निरूढलक्षणा । असति प्रयोजने शक्यार्थबाधप्रतिसन्धान-पूर्वकं शक्यसम्बन्ध्यपरार्थबोधे निरूढलक्षणेति व्यवहारः । यद्यप्यत्र लक्षणेति व्यवहारमात्रम् । वस्तुतस्तु रूढिशक्तिरेव तत्रेति बोध्यम्[४५] ।

वाक्येऽपि लक्षणास्त्येव । अत एवार्थवादवाक्यानां प्राशस्त्ये लक्षणा-सिद्धिः ।

---

४४. वै.सि.मं, पृ.सं. ११४ ४५. वै.सि.मं, पृ.सं. १२३

## २.१.४.४. लक्षितलक्षणाया वृत्त्यन्तरत्वनिराकरणम्-

शक्यार्थस्य परम्परासम्बन्धरूपा लक्षणा लक्षितलक्षणेति नैयायिकाः। यथा द्विरेफपदम्। द्विरेफपदस्य भ्रमरे न शक्तिः। न वा शक्यसाक्षात्-सम्बन्धरूपा लक्षणा। तथा हि - द्विरेफपदस्य रेफद्वये हि शक्तिः। शक्यार्थस्य रेफद्वयस्य साक्षात्सम्बन्धश्च भ्रमरपदे, न तु भ्रमरे। अतोऽत्र शक्यार्थस्य परम्परासम्बन्धरूपा लक्षणा अङ्गीकृता। स्ववाच्यरेफद्वय-घटितपदवाच्यत्वरूपपरम्परासम्बन्धस्य भ्रमरे सत्त्वात्। स्वं द्विरेफपदम्, स्ववाच्यं रेफद्वयम्, तद्घटितपदं भ्रमरपदम्, तद्वाच्यत्वं भ्रमरे वर्तत इति द्विरेफपदस्य भ्रमरे लक्षणा॥

लक्षितेन लक्ष्यते ज्ञायते अनेनेति व्युत्पत्त्या लक्षितपदवाच्यत्वं लक्षितलक्षणापदार्थः। सा च न शक्तिर्नवा लक्षणेति तस्याः वृत्त्यन्त-रत्वमावश्यकमिति जीर्णनैयायिकैकदेशिमतम्। आधुनिकैस्तु शक्यार्थ-परम्परासम्बन्धरूपायास्तस्याः जहत्स्वार्थायामेवान्तर्भावोऽङ्गीकृतः।

ननु व्यर्थोऽयं द्विरेफपदे परम्परासम्बन्धरूपलक्षणास्वीकारप्रयासः। शक्तिलक्षणाभ्यामेवात्र भ्रमरबोधोपपत्तेः। तथा हि- द्वौ रेफौ यत्रेति व्युत्पत्त्या द्विरेफपदसिद्धावत्र द्विरेफपदेन स्वशक्यरेफद्वयसम्बन्धिभ्रमरपदं लक्ष्यते। बहुव्रीहावुत्तरपदलक्षणायाः प्रसिद्धत्वात्। भ्रमरपदेन च शक्त्यैव भ्रमरः बोध्यत इति शक्तिलक्षणाभ्यामेव द्विरेफपदेन भ्रमरबोधः। लक्षितलक्षणेति व्यवहारस्य त्वयमर्थः- लक्षितेन= द्विरेफपदलक्षितेन भ्रमरपदेन लक्षणा= ज्ञापनमिति। ज्ञापनञ्च शक्त्यैव। एतावतैव भ्रमरबोधसामञ्जस्येऽलं परम्परासम्बन्धरूपलक्षणास्वीकारेणेति चेत् मैवम्। तथा सति द्विरेफमानयेत्यादौ भ्रमरपदार्थकर्मकानयनबोधाना-

पत्तिः । तथाहि- प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमित्यस्ति व्युत्पत्तिः । तत्र विभक्तिकृत्तद्धिताख्याताः प्रत्ययाः । यस्मात्प्रत्ययो विधीयते सः प्रकृतिः । प्रकृत्यर्थश्च वृत्त्या पदजन्योपस्थितिविषयो यः, सः । तदन्वितस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तिः । द्विरेफपदेन लक्षणयोपस्थितं भ्रमरपदमेव न तु तदर्थः । शक्त्योपस्थितं तु रेफद्वयमेव न तु भ्रमर इति 'द्विरेफमानय' इत्यत्र 'अम्' प्रत्ययार्थस्य कर्मत्वस्य प्रकृत्यर्थभूतेन द्विरेफपदेन, रेफद्वयेन वाऽन्वयबोधापत्तिः । तथा च द्विरेफपदकर्मकानयनबोधः, रेफद्वयकर्मकानयनबोधो वा स्यान्नतु भ्रमर-कर्मकानयनबोध इत्यतिप्रसङ्गवारणायावश्यं द्विरेफपदस्य भ्रमरे वृत्तिः स्वीकरणीया । सैव शक्यपरम्परासम्बन्धरूपा लक्षितलक्षणेत्युच्यते । इति नव्यनैयायिकाः[४६] ।

वैयाकरणास्तु 'द्विरेफपदं रूढिशक्त्या भ्रमरबोधकम् । अवयवार्थ-प्रतीतिस्तु नास्त्येव रथन्तरादिपदवत्'[४७] इति प्राहुः । अनुभवं पुरस्करोति, द्वैतसिद्धान्तपन्थानमंशतोऽनुकरोति चायं वादः । द्विरेफपदेन भ्रमरस्यैव बोधो भवति । न हि कस्याप्यत्र रेफद्वयस्य भ्रमरपदस्य वा बोधोऽनुभव-सिद्धः । यथा 'रथन्तरं गायति' इत्युक्ते न कस्याप्यत्रावयवार्थबोधः किन्तु सामविशेषस्य रथन्तरस्यैव रूढिशक्त्या बोधस्तद्वदेवात्र द्विरेफ-शब्दस्यापि भ्रमरबोधकत्वं रूढिशक्त्यैवेति साधूक्तं वैयाकरणैः ।

लक्षणया भ्रमरबोधाङ्गीकारे बाधकमप्युपन्यस्तं मञ्जूषायां- कोशेषु भ्रमरपर्यायेषु द्विरेफपदस्य पाठो न स्यादिति । न हि तीरपर्यायेषु गङ्गाशब्दस्य पाठोऽस्ति । कोशेषु शक्त्या समानवाचकानामेव पर्याय-

४६. मुक्ता. शब्दखण्ड पृ.सं. ५९४ ४७. वै.सि.मं, पृ.सं. १५१

त्वाङ्गीकारात्। यदि द्विरेफपदेन लक्षणयैव भ्रमरबोधस्तदा भ्रमरपर्यायेषु द्विरेफपदस्य पाठो न स्यात्। अस्ति च पाठः 'द्विरेफपुष्पलिड्भृङ्गषट्पद-भ्रमरालयः' इत्यादौ[४८]। अतः पुष्पलिड्भृङ्गषट्पदालिप्रभृतिशब्दानामिव द्विरेफशब्दस्यापि भ्रमरे शक्तिरङ्गीकार्या। सा च योगासम्भवे रूढिः।

किञ्च यत्र लक्षणा स्वीकृता 'गङ्गायां घोषः' 'यष्टीः प्रवेशय' इत्यादौ तत्र सर्वत्रापि मुख्यार्थबाधप्रतिसन्धानं वर्तते। किन्तु बाधप्रतिसन्धानं विनैव द्विरेफपदात् भ्रमरबोधो जायतेऽतोऽप्यत्र लक्षणेत्ययुक्तम्।

किञ्च द्विरेफपदेन रेफद्वयसम्बन्धित्वेन भ्रमरपदोपस्थितिरित्युक्तम्। तदेव कथम्? क्रूररात्रिरुचिरादिपदेष्वपि रेफद्वयसम्बन्धस्य सत्त्वात्। अतः स्ववाच्यरेफद्वय-घटितपदमित्युक्ते भ्रमरपदमेव कुत इति नियामकपृच्छायां रूढिमन्तरा नान्यन्नियामकं वक्तुं शक्नुमः। अतोऽत्र अन्ततोऽपि रूढिरङ्गीकार्यैवेति किमनया लक्षितलक्षणया? अतः द्विरेफपदस्य भ्रमरे रूढिरेवेति सिद्धान्तः।

### २.१.४.५. व्यञ्जना -

एषा वैयाकरणैरङ्गीकृता तृतीया वृत्तिः। 'गङ्गायां घोषः' इत्यत्र लक्षितलक्षणयैव शैत्यपावनत्वादिप्रतीतिरिति नैयायिकादयः। किन्तु तत्र दोषदृष्टिभिः वैयाकरणैः व्यञ्जनायाः वृत्त्यन्तरत्वं स्वीकृत्य शैत्य-पावनत्वादीनां व्यङ्ग्यत्वमङ्गीकृतम्। शैत्यपावनत्वादिकं लक्षणाप्रयो-जनम्। तन्न लक्ष्यम्। तत्र शक्यसम्बन्धाभावाल्लक्षणासम्भवात्।

अर्थविषयकः प्रतिभोद्बुद्धः संस्कारविशेषो व्यञ्जनेति बालमभट्टः[४९]।

---

४८. अ.को., सिंहादिवर्गः, श्लो. २९

४९. कलाटीका (वै.सि.मं.टीका) पृ.सं. २६१

मुख्यार्थबोधग्रहनिरपेक्षबोधजनको मुख्यार्थसम्बद्धासम्बद्धसाधारण-प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धसंस्कारविशेषो व्यञ्जना' इति नागेशभट्टः[५०]।

व्यञ्जकत्वञ्च केवलं शब्दस्य, नत्वर्थस्यापि, व्यञ्जनायाः शब्दमात्रवृत्तित्वादिति केचित्। किन्तु वैयाकरणाः नैतत्सहन्ते। दृष्टं ह्यर्थस्यापि व्यञ्जकत्वम्। यथा-

'रतिकाले विलोक्य श्रीर्नाभिपद्मे पितामहम्।
रसाकुला छादयते दक्षिणं नयनं हरेः ॥'

इत्यत्र हरिपदेन दक्षिणनेत्रस्य सूर्यात्मकत्वं,तस्य छादनेन सूर्यास्तः, तेन पद्मसङ्कोचः, तेन पितामहस्य बहिर्गमनं, तेनाप्रतिबद्धं रतिविलासितमिति क्रमेण व्यङ्ग्येषु प्रतीयमानेषु तत्तदर्थप्रतीत्युत्तरमेव व्यङ्ग्यप्रतीतेरर्थस्यापि व्यञ्जकत्वावश्यम्भावात्। तथा चेयं व्यञ्जना न केवलं शब्दवृत्तिः। अर्थ-वृत्तिरपीति वैयाकरणसमयः। अत्र यदधिकं वक्तव्यं तदुत्तरत्र निरूप्यते।




॥ इति द्वितीयः परिच्छेदः ॥

५०. वै.सि.मं., पृ.सं. २५९

## ।। अथ तृतीयः परिच्छेदः ।।

## ३. द्वैतवेदान्ते वृत्तिप्रभेदाः

एतावता प्रबन्धेन पर्यालोचितेषु दर्शनेषु वृत्तिप्रभेदनिरूपणसमये सर्वत्रानुस्यूतः कश्चन समानोंऽशः प्रकटीभूतः । किन्तु माध्वसिद्धान्तोऽत्रात्यन्तविलक्षणं पन्थानमनुसरति । तत्र प्रप्रथमं वृत्तिस्त्रिधा भिद्यते । परममुख्यवृत्तिः, मुख्यवृत्तिः, अमुख्यवृत्तिश्चेति । तत्राद्या परममुख्यवृत्तिरपि द्विविधा- महायोगः, महायोगरूढिश्चेति । द्वितीया मुख्यवृत्तिरपि त्रिविधा- योगो रूढिर्योगरूढिश्चेति । तृतीया अमुख्यवृत्तिरपि द्विविधा । गौणी लक्षणा चेति । गौणीलक्षणयोरपि रूढारूढभेदेन द्वैविध्यमूरीकृतम्- रूढोपचारः (रूढगौणी), उपचारः (केवलगौणी); निरूढलक्षणा, केवललक्षणा चेति ।

मुख्यवृत्तिरेवाभिधेत्यापि व्यवह्रियते । अधोनिर्दिष्टैषा सूचिका, वृत्तिप्रभेदान् मनसि सुस्पष्टं स्थापयति -

### द्वैतसिद्धान्तवृत्तिप्रबोधिनी



द्वैतसिद्धान्ते एतादृशवृत्तिप्रभेदस्वीकारे निमित्तपर्यालोचनपरतयो-पोद्घातरूपेण किञ्चिदत्र प्रस्तूयते ।

## ३.१. परममुख्यवृत्त्यादिस्वीकारे निमित्तपर्यालोचनम् -

सर्वगुणपरिपूर्णस्य सर्वोत्तमस्य हरेः सर्वशब्दवाच्यत्वमिति द्वैत-सिद्धान्तः । सन्ति हि हरेः सर्वशब्दवाच्यत्वे श्रुतयः 'सर्वे वेदा यत्पदमामनन्ति' 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परम-मुदाहरन्ति'[१] 'यो देवानां नामधा एक एव तं सम्प्रश्नं भुवना यन्त्यन्या' इत्याद्याः । स्मृतयश्च -

'वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥'

'मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम्[२] ।'

'अस्यैव सर्वनामानि व्यतिरिक्तस्य सर्वतः ।
यः स्वतन्त्रः सदैवैकः स विष्णुः परमो यतः ॥' इत्यादयः ।

सर्वनामवत्त्वं च परमात्मनः न सर्वाभेदेन । समूलजीवात्मैक्यनिराकरण-पुरस्सरं तत्त्वतो भेदस्य सुदृढमुपपादितत्त्वादत्र सिद्धान्ते । 'अस्यैव सर्वनामानि व्यतिरिक्तस्य सर्वतः' इति स्मृतौ व्यतिरिक्तस्येति स्पष्ट-मुक्तत्वाच्च ।

'सर्वशब्दाभिधेयत्वं सर्वान्तर्यामकत्वतः ।
न तु सर्वस्वरूपत्वात् सर्वचित्तो यतो हरिः ॥'

इति भविष्यत्पुराणवचनस्य जागरूकत्वाच्च ।

१. भाल्लवेयश्रुतिः । २. भाग., ११-२१-४३

सर्वशब्दवाच्यत्वञ्च विष्णोरवश्यमूरीकरणीयम् । कथमन्यथा 'हिरण्यगर्भः समवर्तताग्रे' 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' 'विश्वस्मादिन्द्र उत्तरः' इत्यादीनां ब्रह्मशिवेन्द्रादिसर्वोत्तमत्वप्रापकाणां श्रुतीनां समन्वयः । न ह्यनेकेषामेकदैव सर्वेश्वरत्वं युज्यते । न च 'उदिते जुहोति । अनुदिते जुहोति' इत्यादाविव एतत्कल्पे विष्णुः सर्वेश्वरः, अन्यत्र त्वन्य इति ; देवलोके इन्द्रः सर्वेश्वरः, सत्यलोके तु प्रजापतिरिति वा रीत्या देशकालादिव्यवस्थया विरोधपरिहारः शक्यसम्भवः । 'यः स्वतन्त्रः सदैवैकः स विष्णुः परमो मतः' 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इत्यादौ सदाशब्दव्याकोपात् । विश्वस्मादिन्द्र उत्तरः' इत्यादौ सर्ववाचकस्य विश्वशब्दस्य देवलोकसत्यलोकाद्यर्थसङ्कोचे प्रमाणाभावाच्च । अस्मन्मते तु नात्र विरोधः । सर्वशब्दवाच्यं विष्णुमेव हिरण्यगर्भशिवेन्द्रादिशब्दाः अभिदधतीति 'हिरण्यगर्भः समवर्तताग्रे' 'विश्वस्मादिन्द्र उत्तरः' इत्यादिश्रुतिषु विष्णुसर्वोत्कर्षस्यैवाभिहितत्वात् ।

अवश्यञ्चैतत् विष्णोः सर्वशब्दवाच्यत्वं गुणपूर्णत्वसिद्धये । यद्येकः शब्दः परमात्मानं नाभिदधाति तदा तेन शब्देनोच्यमानो गुणः परमात्मनि न सिद्ध्येदिति सर्वगुणपूर्णत्वभङ्गः । इत्थं गुणपूर्णत्वसिद्ध्यर्थञ्चाभ्युपेयं विष्णोः सर्वशब्दवाच्यत्वम् ।

ननु विष्णोः सर्वशब्दवाच्यत्वे दुःखिबद्धकुबुद्धिरित्यादिशब्दवाच्यत्वमप्यङ्गीकार्यं भवति । तथा च गुणपूर्तिमभिलषता सर्वशब्दवाच्यत्वमङ्गीकुर्वता निर्दोषत्वं परित्याज्यं भवति । दोषे त्वङ्गीक्रियमाणे तदभावरूपो गुणो नास्तीति गुणपूर्णत्वं न सिद्ध्यत्येवेति चेत्- नैष दोषः ।

दुःखीत्यादिशब्दा अपि परमात्मनि गुणवाचका एव। तदुक्तं 'तदधीनत्वादर्थवत्'[३] इति सूत्रानुव्याख्याने-

दुःखिबद्धावराद्यास्तु तदधीनत्वहेतुतः ।
शब्दा ब्रह्मणि वर्तन्ते राज्ञि यद्वत्पराजयः ।। इति[४] ।

स्वातन्त्र्यापेक्षया विष्णौ दोषो नामङ्गलोक्तितः ।
बहुभुक्त्वं यथा दोषो नृषु नैव हरौ क्वचित् ।।
एवं दुःख्यादिशब्दाश्च स्वातन्त्र्यापेक्षयोदिताः ।
नैव दोषाः हरौ तद्वद्बुद्ध्योक्त्या दोषकारिणः ।
तस्मात्ते दोषशब्दाश्च तत्रैव गुणवाचकाः ।। इति च[५] ।।

इदमुक्तं भवति । दुःख्यादिशब्दबलादेव हि दुःखित्वादिप्राप्तिः । ततश्च निर्दोषत्वभङ्गो वक्तव्यः । न च दुःख्यादिशब्दो नियमेन दुःखादिसमवायस्य वाचकः । किन्तु तदस्यास्तीति तत्सम्बन्धमात्रस्य । 'तदस्यास्त्यस्मिन्निति मत्वर्थे 'अत इनिठनौ'[६] इति इनिप्रत्यये दुःखीति निष्पत्तेः । सम्बन्धश्च समवाय इव स्वस्वामिभावोऽपि भवति। धनं हि न देवदत्ते वर्तते, किन्तु तद्गृहे मञ्जूषायाम् । तथाऽपि स्वस्वामिभावसम्बन्धमात्रेण धनीति प्रयोगवत् प्रकृतेऽपि दुःखं न परमात्मनि । किन्तु जीवेष्वेव। 'जीवा एव तु दुःखिनः' इत्युक्तेः । तथाऽपि जीवगतदुःखनियन्तृत्वेन परमात्मनि दुःखीत्यादिशब्दप्रवृत्तिः ।

ननु जीवेषु दुःखसमवायेन दुःखीतिशब्दप्रवृत्तिः परब्रह्मणि तु

---

३. ब्र.सू. (१-४-३) ४. अ.व्या., श्लो. ३०५
५. अ.व्या., श्लो. ३१४-३१६ ६. पा.सू. ५-२-११५

तत्स्वाम्यमात्रेणेत्यत्र किं नियामकमिति चेत्- अर्थापत्तिरिति ब्रूमः। तथा हि - 'निरनिष्टो निरवद्यः' इति श्रुतिः परमात्मनि दुःखाद्यनिष्टाभावं वदति। 'नामानि सर्वाणि यमाविशन्ति' इति तु श्रुतिः दुःख्यादिशब्द-वाच्यत्वमाक्षिपति। तथा च 'निरनिष्टो निरवद्यः' 'नामानि सर्वाणि यमाविशन्ति' इति निरवकाशश्रुतिद्वयान्यथानुपपत्त्या दुःखादिनियन्तृ-त्वेनैव दुःख्यादिशब्दप्रवृत्तिरङ्गीकार्या भवति।

नन्वस्त्वेवं तद्धितान्तेषु गतिः। तत्र सम्बन्धबोधकप्रत्ययसद्भावात्। बद्धेत्यादिषु कृदन्तेषु अवरेत्यादिषु रूढेषु च कथम्? अत्र सम्बन्ध-सामान्यबोधकप्रत्ययाभावात्। कृत्प्रत्ययानां तु कर्मत्वादिकारक-विशेषे विधानात् इति चेत्- इत्थम्। बद्धशब्दस्य बन्धं प्रति कर्मत्वं प्रवृत्तिनिमित्तम्। 'तयोरेव कृत्यक्तखलर्थाः'[७] इति कर्मणि क्तप्रत्यय-विधानात्। बन्धकर्मत्वं यस्यास्ति तत्र बद्धशब्दो वर्तते। यस्यास्तीति च सम्बन्धमात्रमुच्यते। सम्बन्धविशेषे प्रमाणाभावात्। तथा च बन्धकर्म-त्वादिकं स्वाम्यसम्बन्धेन परमात्मन्यस्तीति बद्धशब्दवाच्यत्वं तस्य[८]। कारकान्तरवाचिष्वप्येवमेव। अवरादिशब्देष्वप्येवमेव। अवरत्वं हि अवर-शब्दप्रवृत्तिनिमित्तम्। तद्यस्यास्ति तत्रावरशब्दो वाचकत्वेन वर्तते। यस्यास्तीति च सम्बन्धमात्रमुच्यते। न तु समवायादिविशेषः। तथा चावरत्वादिनियन्तृत्वेनावरादिशब्दानां भगवति प्रवृत्तिः। अनित्यादि-शब्देष्वप्येवमेव।

यद्वा 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्च' इति धातुसूत्रादवर-

---

७. पा.सू. ३-४-७०    ८. न्या.सु., पृ.सं. १७९७

शब्दाण्णिचि 'सनाद्यन्ता धातवः'[९] इति धातुसंज्ञायाम् 'अवरयतीत्यवरः' इति कर्तृव्युत्पत्त्या अवरं करोतीत्यर्थलाभेनावरादिशब्दानां ब्रह्मणि वृत्तिः सिद्धैव[१०]। 'स बद्धः स दुःखी स बन्धयति स दुःखयति' इत्यादिकौषारव-श्रुतिश्चात्र मानम्।

ननु स्यादेषा व्याख्या यत्र शब्दतोऽवरत्वादिप्रतीतिः। यत्र पुनः 'अव्यक्तात्पुरुषः परः' इत्यादावर्थादवरत्वप्रतीतिस्तत्र कथम्? न हि शब्दवदुपपत्तिर्व्याख्यानमर्हति। अत्र हि पञ्चमीप्रतिपादितपरत्वावधित्व-स्यावरत्वाविनाभावात् अव्यक्तशब्दस्य परब्रह्मवाचकत्वे परब्रह्मणि पुरुषादवरत्वमर्थादापतितम्। कथमत्र परब्रह्मण्यवरत्वपरिहारः। अवर-शब्दस्यैवात्राभावात्। इति चेत्-

उच्यते। 'अव्यक्तात्पुरुषः परः' इत्यत्र पञ्चम्या हि पुरुषगतं परत्वं प्रति अव्यक्तस्यावधित्वमस्तीत्येतावदेव लभ्यते।

अवधित्वमस्तीत्यनेन समवाय एव प्राप्नोतीति नास्ति नियमः। धनम् अस्यास्तीत्यत्रेव अवधित्वस्वामित्वेनाप्युपपत्तेः। तथा चाव्यक्तस्य परत्वं प्रत्यवधित्वमस्तीत्यनेन परत्वावधित्वस्वामित्वमव्यक्ते प्रतिपन्नम्। परत्वावधित्वस्वामित्वाविनाभूतश्च नावरत्वं, किन्तु अवरत्वस्वामित्व-मेव। अतः परत्वावधित्वस्वामिनः अव्यक्तशब्दवाच्यस्य ब्रह्मणः अवरत्वस्वामित्वमेवार्थादापतितमिति न कश्चिद्विरोधः[११]।

---

९. पा.सू. ३-१-३२

१०. किञ्च प्रातिपदिकाद्धात्वर्थ इति ण्यन्तेभ्यः पचाद्यचि विहिते सुलभैवावरादि-शब्दप्रवृत्तिः॥ (न्या.सु. पृ.सं. १७९७)

११. न्या.सु. पृ.सं. १७९८

प्रसिद्धश्च तदधीनत्वनिमित्तेन शब्दप्रयोगः 'पराजयी भद्रसेनः' इत्यादौ। अत्र भटसमवेतस्य पराजयस्य राजाधीनत्वमात्रेण यथा राज्ञि पराजयीति शब्दो वर्तते तद्वदेव दुःख्यादिशब्दाः परमात्मनि जीवगतस्य दुःखस्य तदधीनत्वहेतुत एव। न हि शब्दप्रवृत्तिनिमित्तानां दुःखादीनां तद्गतत्वं केवलं दुःख्यादिशब्दप्रवृत्तेः निमित्तम्, किन्तु अन्यगतेषु प्रवृत्तिनिमित्तेषु स्वातन्त्र्यमपि।

तदुक्तम्- 'स्वातन्त्र्यं तद्गतत्वञ्च शब्दवृत्तेर्हि कारणम्'[१२] इति। इत्थञ्च दुःख्यादि-शब्दा अपि 'निरनिष्टो निरवद्यः' 'नामानि सर्वाणि यमा-विशन्ति' इति श्रुतिद्वयान्यथानुपपत्तिबलात् जीवगतदुःखादिषु स्वातन्त्र्येण निमित्तेन ब्रह्मणि प्रवर्तन्ते॥

### ३.१.१. परमात्मनः मुख्यवृत्त्या शब्दवाच्यत्वम् -

ननु 'तत्तु समन्वयात्'[१३] इति सूत्रे परब्रह्मणः मुख्यया वृत्त्या सर्वशब्दवाच्यत्वमुक्तम्[१४]। 'नामानि सर्वाणि यमाविशन्ति' इत्यत्रापि 'आङ्' इत्युपसर्गस्य मुख्यया वृत्त्या इत्यर्थं व्याख्याय सर्वाणि नामानि परब्रह्मणि मुख्यया वृत्त्या विशन्तीत्यर्थः प्रतिपादितः। न ह्यमुख्यवृत्त्या शब्दप्रतिपाद्यत्वे परब्रह्मणो गुणपूर्तिः सिद्ध्यति। शब्दप्रवृत्तिनिमित्त-भूतगुणाभावेऽपि अमुख्यवृत्त्या तत्र शब्दप्रवृत्तिसिद्धेः। तथा च सर्वशब्दानां मुख्यया वृत्त्या परब्रह्मवाचकत्वं वाच्यम्।

तत्तु न सम्भवति। रूढियोगौ हि मुख्यवृत्ती। तत्रापि योगाद्रूढिर्बल-वती। न च शब्दानां भगवति रूढिरस्ति। प्रत्युत तदितरत्रैव। योगस्तु

---

१२. अ.व्या. (श्लो. ३०५)  १३. ब्र.सू.- १-२-४

१४. समिति ह्युपसर्गेण पदमुख्यार्थतोच्यते। (अ.व्या.)

सम्भवति। तथाऽपि सः तदितरसमानः। तथाचार्थान्तरे एव मुख्यवृत्तयः शब्दाः। रूढेर्योगस्य च सत्त्वात्। न त्वीश्वरे मुख्यवृत्तयस्ते। तत्र योगमात्रस्य कथञ्चित्सम्भवेऽपि रूढेरभावात् इति चेत्- अत्रोच्यते। यत्तावदुक्तं योगस्योभयत्र साम्यमिति तदेव नास्ति। अवयवार्थमनुसृत्य वृत्तिर्हि योगः। अवयवार्थश्च यथा यथोत्कृष्यते तथा तथा योगवृत्तेरप्युत्कर्षेण भाव्यम्। निमित्तवैचित्र्ये नैमित्तिकावैचित्र्यस्यानुपपत्तेः। अवयवार्थश्चेश्वरेऽनवधिकः स्वतन्त्रश्च। अर्थान्तरे त्वल्पः पराधीनश्च। अतः कथं योगस्योभयत्र साम्यम्? किन्त्वीश्वरे महायोगोऽन्यत्र योगमात्रमिति ईश्वर एव शब्दमुख्यार्थः।

यच्चोक्तमीश्वरे शब्दानां रूढिर्नास्तीति तदपि न। मुख्यरूढेर्विष्णावेव सत्त्वात्। विद्वद्रूढिर्हि मुख्यरूढिरित्युच्यते। सा च शब्दानां विष्णौ प्रयोगप्राचुर्येणानुमीयते। इन्द्रादिशब्दानां भगवति अज्ञसम्बन्धिनो बहुलातिप्रयोगस्याभावेऽपि विद्वत्सम्बन्धिनस्तस्य भावात्। विदुषां बहुलातिप्रयोगेणानुमिताया रूढेरेव मुख्यत्वाच्च। प्रकृते 'विश्वस्मादिन्द्र उत्तरः' इत्यादौ भगवत्येव विद्वद्रूढिरिति युक्तं मुख्यया वृत्त्या भगवतः सर्वशब्दवाच्यत्वम्। तदिदमुक्तमनुव्याख्याने -

> ..................रूढिर्हि द्विविधा मता।
> अविद्वद्विद्वदास्यैव मुख्या हि विदुषां तु सा।
> विद्वद्रूढिर्वैदिका[१५] स्यात् सा योगादेव लभ्यते।
> तस्मान्मुख्यार्थता विष्णोः ............... ॥ इति[१६]।

---

१५. वैदिकेति टाबन्तस्य साधुत्वविचारस्तु न्यायसुधायां (पृ.सं. १८०८) द्रष्टव्यः।
१६. अ.व्या. (श्लो - २४१)

### ३.१.२. शब्दप्रवृत्तौ तद्गतत्वापेक्षया स्वातन्त्र्यस्यैव मुख्यत्वम् -

ननु 'स्वातन्त्र्यं तद्गतत्वञ्च शब्दवृत्तेर्हि कारणम्'[१७] इत्युपपादितयोः शब्दप्रवृत्तिहेतुभूतयोः स्वातन्त्र्यतद्गतत्वयोः तद्गतत्वमेव मुख्यम्। तत्रैव प्रयोगप्राचुर्यात्। तथा च दुःखिबद्धादिशब्दानां मुख्यया वृत्त्या परब्रह्म-प्रतिपादकत्वमसिद्धमिति चेत्- न। शब्दप्रवृत्तौ तद्गतत्वापेक्षया तदधी-नत्वस्यैव (स्वातन्त्र्यस्यैव) मुख्यत्वात्। तथा हि- स्वातन्त्र्यस्य तावत् शब्दप्रवृत्तिकारणत्वमवश्यमभ्युपेयम्। कथमन्यथा स्वधामोपविष्टे राजनि जयिशब्दप्रयोगः। जयस्य राजगतत्वाभावेऽपि तदधीनत्वहेतुत एव राज्ञि जयिशब्दप्रवृत्तिर्वाच्या। न चोत्कर्षेण वर्तमानत्वस्यापि जयिधात्वर्थ-त्वात् तदाश्रयत्वस्य राज्ञि सत्त्वात् न स्वातन्त्र्यं तत्र प्रवृत्तिनिमित्तमिति वाच्यम्। राजा शत्रून् जयतीत्यभिभवाभिप्रायेणापि तत्प्रयोगात् तदाश्रय-त्वस्य राज्ञ्यसत्त्वेन तत्र स्वातन्त्र्यनिमित्तकत्वस्यैवाश्रयणीयत्वात्। लक्षणया राज्ञि जयिशब्दप्रयोगोऽस्त्विति तु न वक्तुं शक्यम्। तदस्या-स्तीति प्रतिपादितस्य सम्बन्धसामान्यरूपजयिशब्दप्रवृत्तिनिमित्तस्य राजभृत्ययोः साम्यात्। निमित्तसाम्येऽपि लक्षणाङ्गीकारे विनिगमका-भावात् जीवेष्वपि दुःख्यादिशब्दप्रवृत्तौ लक्षणयैव दुःख्यादिशब्द-प्रवृत्तिरित्यङ्गीकृत्यैव निर्वाहे तद्गतत्वमपि प्रवृत्तिनिमित्तत्वेनाकल्पनीयं स्यादित्याद्यापत्तिः। तस्मात् स्वातन्त्र्यमपि शब्दप्रवृत्तिनिमित्तमित्यत्र नास्ति विवादः।

तद्गतत्वस्वातन्त्र्ययोः स्वातन्त्र्यमेव मुख्यं शब्दप्रवृत्तिनिमित्तम्। स्वातन्त्र्यनिमित्तेनैव प्रयोगप्राचुर्यात्। 'राजा जयी' इति भूयान् प्रयोगः

---

१७. अ.व्या. (श्लो - ३०५)

उपलब्धः । 'भृत्यो जयी' इति तु न तावान् प्रयोगः । जयस्य भृत्यगतत्त्वेऽपि तं जयं प्रति स्वातन्त्र्यमात्रेण राज्ञि विजयिशब्दो यावत्प्रयुज्यते न तावज्जयाधिकरणेऽपि भृत्ये प्रयुज्यते । तस्मात् स्वातन्त्र्यमेव मुख्यं शब्दप्रवृत्तिनिमित्तम् ।

यद्यपि प्रयोगप्राचुर्यं न मुख्यताहेतुः । यत्र मुख्यार्थः न ज्ञातः तादृशेषु लाक्षणिकादिप्रयोगेष्वपि प्रयोगप्राचुर्यदर्शनात् । तथाऽपि परेण यदुक्तं प्रयोगप्राचुर्यात् तद्गतत्वमेव मुख्यं, स्वातन्त्र्यं तु तदप्राचुर्यात् अमुख्यमिति तत्रासिद्धिरनेनोद्भाविता । स्वातन्त्र्यस्य मुख्यतासिद्धिस्तु- 'यत् यदधीन-सत्ताप्रतीतिप्रवृत्तिकं तत्तस्य मुख्यतो भवति, यथेष्टविनियोगयोग्य-त्वात् । न तु यत्र यत्सम्बद्धं तस्य तन्मुख्यतः, यथेष्टविनियोगायोग्य-त्वात् । न हि जीवेन दुःखादिकं हातुमुपादातुं वा शक्यते । अतः स्वातन्त्र्यमेव मुख्यम्'[१८] इति न्यायसुधोक्तरीत्यावगन्तव्या । एतत्सर्व-मभिप्रेत्योक्तमनुव्याख्याने -

स्वातन्त्र्यं तत्र मुख्यं स्यात् कुतो राज्ञि जयोऽन्यथा ।
न हि भृत्यस्य विजयिशब्दस्तावत्प्रयुज्यते ।
यावद्राज्ञ्यन्यगत्वेऽपि स्वातन्त्र्याभासमात्रतः ॥[१९] इति ।

स्वातन्त्र्यादिति वक्तव्ये स्वातन्त्र्याभासमात्रत इति वदन्नाचार्यवर्यः राजजयस्यापि परमात्मायत्तत्वात् वस्तुतोऽस्वतन्त्रेऽपि राज्ञि स्वातन्त्र्या-भासमात्रतो जयीत्यादिशब्दा प्रवर्तन्ते किमुतानुपचरितस्वातन्त्र्ये परमात्मनीति कैमुत्यं द्योतयति ।

---

१८. अ.व्या.(श्लो - ३०६)　　१९. न्या.सु. (पृ.सं. १८०८)

ननु स्वाम्यस्य शब्दप्रवृत्तिनिमित्तत्वे भृत्ये विजेतरि 'राजा जयी' इति प्रयोगवत् भृत्ये मृते बद्धे वा 'राजा मृतः' 'राजा बद्धः' इति प्रयोगापत्तिः । न चास्ति तादृशः प्रयोगः । तेन जानीमो न स्वाम्यं प्रवृत्तिनिमित्तमिति । न च 'प्रयोगे सति निमित्तानुसरणम्, न तु निमित्तमस्तीति प्रयोगः' इति न्यायेन बन्धनादिस्वाम्यरूपनिमित्तस्य राज्ञि सत्त्वेऽपि न 'राजा बद्धः'इत्यादिप्रयोगावश्यम्भाव इति वाच्यम् । अमुख्यप्रयोगविषयत्वात्तस्य न्यायस्य । तत्र हि प्रवृत्तिनिमित्तं न सामग्री । किन्तु सामग्र्येकदेशः । सामग्र्येकदेशस्य कार्यव्यभिचारसम्भवात् सत्यपि तस्मिन् कार्यानुत्पादनमुपपद्येतापि । मुख्यप्रयोगे तु प्रवृत्तिनिमित्तमेव सामग्री । सामग्र्याश्च कार्याव्यभिचारनियमात् सति स्वाम्यरूपनिमित्ते 'राजा बद्धः' इत्यादि प्रयोगः आवश्यक एव । न ह्युपगोरपत्ये औपगवशब्दप्रयोगाभावः कदाचिद्भवतीति चेत् - अत्र वक्तव्यम्- स्वाम्यसम्बन्धस्य राज्ञि सद्भावेन 'राजा मृतः' इत्यादिप्रयोगः खल्वापाद्यते । कोऽयं प्रयोगो नाम? प्रयोगमूलं व्याकरणमित्यादाविव प्रयोगशब्दः शब्दशक्तिपर इति चेत् तर्हि बद्धमृतादिशब्दानां राज्ञि शक्तिः स्यादित्यापादनं कृतं स्यात्तत्त्विष्टमेव । राज्ञि बद्धादिशब्दशक्तेरङ्गीकारात् । ननु तर्हि 'राजा बद्धः' इत्याद्युच्चारणं स्यादित्यापाद्यत इति चेत्- आपाद्यतां नाम ! तथा प्रयोगाभावस्तु प्रतिबन्धकसद्भावात् । यदि राजाधीनभृत्यसम्बन्धादिकं विवक्षयित्वा राज्ञि 'राजा बद्धः, 'मृतः' इत्यादिवाक्यं प्रयुज्येत तदा राज्ञोऽपि बन्धादेः सम्भावितत्त्वेन व्युत्पन्नस्य संशयः स्यात्, किं राजाधीनस्य भृत्यस्य बद्धत्वादिनैवमुच्यते, किं वा राज्ञ एव बद्धत्वादिनेति । आकाङ्क्षासन्निधि-

योग्यतानामुभयत्र सद्भावेनार्थद्वयप्रतीतेरवर्जनीयत्वात् । संशयश्च मा भूदिति न तथा प्रयुज्यते । मा भूत्संशय इत्येवं निवृत्तः प्रयोगः न हि स्वातन्त्र्यस्य शब्दप्रवृत्तिनिमित्तत्वाभावगमको भवति । मणिमन्त्रादि-प्रतिबद्धोऽग्निर्नाधाक्षीदित्येतावता दाहकारणत्वाभावस्यानापादनात् ।

तथा च भवत्येव स्वातन्त्र्यं प्रवृत्तिनिमित्तम् । प्रयोगाभावस्तु संशयकारणत्वरूपप्रतिबन्धकनिमित्तः ।

'राजा बद्धः' इत्यादि प्रयोगाभावे निमित्तान्तरमप्यस्ति । उक्तं ह्यनुव्याख्याने -

'अमङ्गलत्वाच्छब्दानां राज्ञो योगादमङ्गले ।
अप्रियत्वात्तु शब्दस्य स्यात्प्रयोगनिवर्तनम् ॥'[२०] इति ।

तथा च 'राजा बद्धः' इत्यादिवाक्यानां पाक्षिकराजबन्धाद्य-मङ्गल-प्रतीतिजनकत्वसम्भवात् राज्ञोऽमङ्गलाभिधानस्य च राज्ञस्तत्पुरुषाणां चाप्रीतिहेतुत्वादेव तथा प्रयोगाभावः । न पुनः स्वातन्त्र्यस्य शब्द-प्रवृत्तिनिमित्तत्वाभावात् ।

नन्वेवं राजा पराजयीत्यपि न प्रयोक्तव्यं, तस्यापि राज्यमङ्गलाभि-धायित्वादिति चेन्न । भृत्यद्वारैव राजा विजयते, पराजयते चेति प्रसिद्ध-तयात्र संशयस्यैवानुदयात् । तथा च तत्र संशयकारणत्वरूप-प्रतिबन्धकाभावात् स्वातन्त्र्यनिमित्तः पराजयीत्यादिप्रयोगो युक्त एव । 'मृतः' 'बद्धः' इत्यादौ तु संशयजननात् राज्ञि पाक्षिकामङ्गलप्राप्तिरिति तथा प्रयोगाभावश्च युज्यते ।

---

२०. अ.व्या. (श्लो.३०१)

इत्थश्चैतावत्तु सिद्धं यत् शब्दप्रवृत्तौ तद्गतत्त्वमिव स्वातन्त्र्यमपि निमित्तम्। तच्च तद्गतत्वापेक्षया मुख्यम्। अत एव दुःखिबद्धावरादीनां दोषशब्दानामपि मुख्यवृत्त्यैव विष्णौ प्रवृत्तिरिति।

ननु सत्यपि निमित्ते यथा 'राजा बद्धः' इत्यादिप्रयोगाभावस्तथा विष्णुर्दुःखीत्यादिप्रयोगाभावोऽपि कुतो न भवेदत्रापि पाक्षिकस्य विष्णुवैष्णवभयस्य प्रतिबन्धकत्वसम्भवादिति चेन्न। राज्ञि दोषस्य सम्भावितत्वेन संशयजननेन तन्निमित्तकराजराजपुरुषादिभयस्य प्रतिबन्धकत्वसम्भवेऽपि प्रकृते 'निरनिष्टो निरवद्यः' इत्यादिश्रुतेर्विष्णौ दोषातिदूरत्वनिश्चयेन संशयस्यैवानुत्पादेन प्रतिबन्धकाभावात्।

अयमाशयः- सत्त्यपि निमित्ते दुःखीत्यादिपदप्रयोगनिवृत्तिर्हि विष्णुवैष्णवेभ्यो भयात्स्यात्। भयकारणश्च विष्णुवैष्णवाप्रीतिः। अप्रीतौ च हेतुः विष्णोरनेन दोषित्वमुच्यत इति संशयः। तादृशसंशयस्य च निमित्तं वाक्यस्योभयार्थप्रतीतिजनकत्वम्। उभयार्थप्रतीतिजनकत्वे च हेतुरुभयत्रापि योग्यतादिसद्भावः। न चासावस्ति प्रकृते। प्राज्ञानां विष्णुवैष्णवानां परमेश्वरनिर्दोषतानिश्चयवत्त्वेन योग्यतानिश्चयानुपपत्तेः। तथा च योग्यताभावात् 'विष्णुर्दुःखी' इति वाक्यस्य नोभयार्थप्रतीतिजनकत्वम्। तदभावे च संशयाभावः। संशयाभावे च विष्णुवैष्णवाप्रीत्यभावः। ततश्च तद्भयाभावः। इत्थश्च विष्णुवैष्णवभयरूपस्य प्रतिबन्धकस्याभावात्, प्रवृत्तिनिमित्तस्य तु सद्भावात् दुःखिबद्धादिशब्दानां विष्णौ प्रयोगो भवत्येव। तदप्युक्तमनुव्याख्याने-

अतो दोषातिदूरत्वात्संशयस्याप्यसम्भवात्।

दोषाणां विष्णुगत्वस्य प्राज्ञबुद्धिव्यपेक्षया ।
स्वातन्त्र्यार्थमभिप्रेत्य दोषशब्दाश्च विष्णवि ।।[२१] इति ।

विष्णवीति तु 'मदे सुतस्य विष्णवि' इति वेदे श्रुतो वैदिकः प्रयोगः । 'सत्यं परं धीमहि'[२२] इत्यत्र धीमहीतिवत् । वैदिकशब्दप्रयोगश्च स्वस्य परमवैदिकत्वेन स्वोक्तस्य वेदानुसारित्वज्ञापनाय[२३] । श्रुतिसम्मतिमप्याहाचार्यः -

वासुदेवश्रुतिश्चाह नैव विष्णावमङ्गलम् ।
मङ्गलामङ्गलेऽन्यत्र ततो नामङ्गलं वदेत् ।
स्वातन्त्र्यापेक्षया विष्णौ दोषो नामङ्गलोक्तितः ।।[२४] इति ।

तथा चेदं सुनिष्पन्नं यत् दुःखिबद्धादयः शब्दाः जीवे दोषप्रत्यायकाश्चेदपि परब्रह्मणि त एव शब्दाः गुणप्रत्यायका भवन्ति । दृष्टश्चेदं बहुत्र । यथा- 'बहुभुक् देवदत्तः' इत्युक्ते बहु भुङ्क्ते, अत एव निन्द्यश्चेति प्रतीयते । 'अस्वर्ग्यं चातिभोजनम्' इति स्मृतेः । बहुभोगनिन्द्यत्वयोर्देवदत्ते सम्भवेनैवं भवति । अत एव देवदत्ताद्भीरुणा तत्कलत्रादिना 'बहुभुक् त्वमसि' इति न प्रयुज्यते । तदेव यदि परमेश्वरे बहुभुक् हरिरिति प्रयुज्यते तदा न तत्र दोषप्रतिभासः । परमेश्वरे प्राकृतानां संसारधर्माणामत्यन्तासम्भावितत्वनिश्चयात् । प्रत्युत 'अद्यतेत्ति च भूतानि, तस्मादन्नं तदुच्यत' इत्यादिश्रुतिप्रतिपादितसर्वसंहर्तृत्वादिगुणवत्त्वमेव बहुभुक्शब्देन

---

२१. अ.व्या. (श्लो.३१२) २२. भाग - (१-२-१)
२३. स्वस्य परमवैदिकताख्यापनाय विष्णवीति वैदिकप्रयोगः ।
(न्या.सु. पृ.सं. १८२२)
२४. अ.व्या. (श्लो. ३१४)

परमात्मनि प्रत्याय्यते। अत एवान्यत्र दोषप्रत्यायकानपि 'बहुभुक् त्वमसि' इत्यादिशब्दान् भगवति प्रयुञ्जानाः प्राज्ञाः विष्णुवैष्णवेभ्यो न बिभ्यति।

ननु 'ब्रह्म दुःखीति वेद चेत्तर्हि स वेत्ता दुःख्येव भवति' इत्यादिश्रुतौ ब्रह्मणि दुःखित्वादिवेदनमनर्थहेतुत्वेनोच्यते दुःख्यादिशब्दस्य गुणवाचित्वे कथमिदमिति चेत्- दुःखादीनां परमात्मगतत्ववेदनविवक्षया श्रुतौ अनर्थहेतुत्वोक्तिः। तथा च दुःखादीनां परमात्मगतत्वविवक्षया ब्रह्म दुःखीति वेद चेत्तर्हि दुःख्येव भवति। परमात्माधीनं जीवगतं दुःखमिति स्वातन्त्र्यविवक्षया दुःखीति वेदने तु गुण एव ब्रह्मणि बुद्ध इति नास्त्यनर्थहेतुत्वम्। तच्चोक्तम् -

> नैव दोषा हरौ तद्बुद्ध्योक्ता दोषकारिणः।
> तस्मात्ते दोषशब्दाश्च तत्रैव गुणवाचकाः॥ इति[२९]।

इत्थञ्च गुणपूर्णो हरिः सर्वशब्दवाच्य इति सिद्धम्॥

## ३.१.३. कर्मकाण्डगतानामपि वाक्यानां ब्रह्मवाचकत्वम् -

'वसन्ते वसन्ते ज्योतिषा यजेत' 'हुं फट्' 'स्वाहा' 'नमः' इत्यादयः कर्मकाण्डगता अपि शब्दाः मुख्यया वृत्त्या परमात्मानमभिदधतीति द्वैतसिद्धान्तः। नन्वत्र किं वाक्यार्थः परमात्मा? उत पदार्थः। नाऽद्यः। वसन्तकाले ज्योतिर्यागकर्तव्यतादेरेव वाक्यार्थतया प्रतीतेः। नापि द्वितीयः। वसन्तादिशब्दानां परमात्मनि रूढियोगयोरभावात्। किञ्च रूढ्या परमात्मनि समन्वयाश्रयणे प्रयोजनाभावोऽपि। गुणपूर्त्य-सिद्धेः। योगन्तु वसन्तादीनां परमात्मनि न पश्याम इति चेत्- अत्रो-

२९. अनुव्याख्यानोदाहृतवासुदेवश्रुतिः (श्लो. ३१६)

च्यते। यत्तावदुक्तं किं ब्रह्मणि वाक्यसमन्वयः किं वा पदसमन्वय इति, तत्रोभयमपीति ब्रूमः। पदसमन्वय एव प्रथमं प्रदर्श्यते। न च वृत्त्य-सम्भवः। वसन्तादिशब्दानां परमात्मनि योगसद्भावात्। कर्मकाण्ड-गतस्य समस्तस्यापि पदस्य परमात्मनि योगः प्रदर्शयितुं शक्यः। स्थालीपुलाकन्यायेन कतिचिदेव प्रदर्शयिष्यते-

'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यत्र प्रतिपदं परमात्मा प्रतिपाद्यः, तथा हि- वसतीति वसः। वर्तत इत्यर्थः। 'वस-निवासे' इति धातोः पचाद्यच्। एवं तनोतीति तिः। व्याप्तिमानित्यर्थः। 'तनु-विस्तारे' इति धातोरौणादिकडिप्रत्यये डित्वसामर्थ्यादभस्यापि टेरन्नित्यस्य लोपे त्+ इः= तिः इति रूपम्। 'वर्णागमो वर्णविपर्ययश्च' इति[२६] निरुक्तरीत्या पूर्वपदस्य 'वस' इत्यस्य नकारागमः। वसंश्चासौ तिश्चेति वसन्तिः। व्याप्तो वर्तत इत्यर्थः। तस्य सम्बुद्धौ वसन्ते। 'हे हरे' इतिवत्। वसन्ते वसन्ते इति द्विरुक्तिश्चादरार्था। 'श्रीराम राम शरणं भव राम राम' इतिवत्।

ज्योतिषा यजेतेत्यत्र ज्योतिष + आयजेत इति च्छेदः। जिः ओतिः यस्मिन् सः ज्योतिः। ज्योतिश्चासौ षश्च ज्योतिषः। तत्सम्बुद्धौ ज्योतिष। जिः= जातम् 'जनी - प्रादुर्भावे' इति धातोरौणादिकडिप्रत्यये डित्वसामर्थ्याट्टिरिति टिलोपे 'जिः' इति रूपम्। जातं जगदिति तदर्थः। ओतिः= ओतम्। प्रवेशार्थकादवतेः कर्तरि क्तिन् प्रत्यये 'ज्वरत्वर-

२६. वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥
(पृषोदरादिसूत्रे वृत्तिः)

ञ्विव्यवियवामुपधायाश्च'[२७] इत्यकारवकारयोरूठि सवर्णदीर्घे 'सार्व-धातुकार्धधातुकयोरिति'[२८] गुणे ओतिरिति रूपम्। प्रविष्टमिति तदर्थः। तथा च जिः= जातं जगत् ओतिः= प्रविष्टं यस्मिन्नसौ ज्योतिः= विश्वम्भरः परमात्मा ॥ चेष्टकरूपत्वात् षः। 'षकारः प्राण आत्मा' इति श्रुतेः। प्रकर्षेणानतीति प्राणः= चेष्टकः। प्राणरूपत्वात् षः। ज्योतिश्चासौ षश्चेति ज्योतिषः। विश्वम्भरश्चेष्टकश्चेति तदर्थः। तस्य सम्बुद्धिः ज्योतिष इति।

आयजेत- यजतेर्भावे कः। 'घञर्थे कविधानम्' इति वार्तिकात्। यजतीति यजः। 'वचिस्वपि यजादीनां किति' इति सम्प्रसारणाभावस्तु छान्दसः। तथा च यजो यज्ञः। अथवा कर्तर्येव पचाद्यच्। यजतीति यजः। याजक इत्यर्थः। आङित्युपसर्गः। सम्यक्, समन्तादिति वा तदर्थः। ततश्च आ=सम्यक्, समन्ताद्वा यजेन = यज्ञेन कर्मणा, याजकेन पुरुषेण वा इतः = प्राप्तः आयजेतः। सकलयज्ञभोक्ता, यज्वभिर्ज्ञानद्वारा प्राप्यश्चेत्यर्थः। तस्य सम्बुद्धिः आयजेत[२९]।

एवं गच्छ भुङ्क्ष्वेत्यादीनामपि सम्बुध्यन्ततया परमात्मबोधकत्वं बोध्यम्। यथा- गम्लृ= गतौ, छदि-आवरणे' इत्येतयोः 'अन्यत्रापि दृश्यते' इति डप्रत्ययः। गं= विगतं छं= छादनमविद्यादिकं यस्मात्सः गच्छः। तत्सम्बुद्धौ गच्छ। अविद्यादिरहित इत्यर्थः॥ भूतक्षयकरो भुङ्क्ष्वः। भुशब्दः भूतशब्दस्यादेशः। 'क्षि= क्षये' इत्यस्मात् ड्वप्रत्यये

---

२७. पा.सू. १-४-१३ २८. पा.सू.

२९. जातमोतं हरौ यस्माज्योतिः षः प्राणरूपतः।
आयजेतश्चायजेतः वसन्तिश्च वसंस्ततः॥ (अ.व्या.श्लो.३२७)

क्ष्वः= क्षयकरः। पूर्वपदस्य च मकारागमस्तु पृषोदरादित्वात्। 'पृषोदरादीनि यथोपदिष्टम्' इति षष्ठतृतीयाध्याये सूत्रम्। येषु वर्णागमलोपविकाराः शास्त्रेणाविहिताः, लोके च दृश्यन्ते तानि पृषोदरप्रकाराणि शब्दरूपाणि यथोपदिष्टं= शिष्टैः प्रयुक्तानि सर्वाण्यपि साधून्येव मन्तव्यानीति तदर्थः। पृषोदरादिगणश्चाकृतिगणः। तथा च भुं क्षयते इति भुङ्क्ष्वः। तस्य सम्बुद्धिः भुङ्क्ष्वेति।

हुंफट्, कवचम्, वषट्, वौषट्, स्वाहा, नम इत्यादीनामपि कर्मकाण्डीयशब्दानां भगवति योगवृत्त्या समन्वयः दर्शितोऽनुव्याख्याने[३०]। विस्तरभिया नात्र लिख्यते।

उक्तदिशा अशेषक्रियाशब्दैरनन्तनामशब्दैश्च एक एव परमात्मा योगवृत्त्या गीयते। न तु रूढिमात्रेणातस्तस्य तत्तच्छब्दबोध्यगुणवत्त्वेनानन्तगुणता सिद्ध्यति।

ननु वसन्ते ज्योतिषेत्यादिशब्दानां परमेश्वरे निर्वचनं दर्शितम्। न हि निर्वचनं कर्तुं शक्यत इत्येतावन्मात्रेण परमेश्वरस्यानन्तगुणता वेदतः सिद्ध्यति। व्याख्यातृमतिपरिकल्पितस्य निर्वचनस्यार्थान्तरेऽन्यथा च सम्भवात्। अन्यथा 'श्वित्री शोधनं करोति' इत्यभिप्रायेण प्रयुक्तस्य श्वेतो धावतीति वाक्यस्य 'श्वा इतः धावति' इति च्छेदबोधितः इतः

---

३०. स्फुटत्वात्फडिति प्रोक्तः कव रक्षण इत्यतः।
कवचं वर्तते यस्मात् षड्गुणत्वेन सर्वदा।
वषट् तद्वत्वतस्तेषां वौषडित्येव कथ्यते।
स्वीयं स्वीकुरुते यस्मात्स्वाहेत्युक्तो जनार्दनः।
नमन्त्यस्मिन् गुणा यस्मान्नम इत्येव कथ्यते॥ (अ.व्या.श्लो.३१८-३२०)

सारमेयः द्रुतं गच्छतीत्यपि प्रमेयं प्रसज्येतेति चेत्- भवेदेवं श्वेतो धावतीति वाक्यस्य श्वा इतो धावतीत्यर्थे तात्पर्याभाव इव वसन्त इत्यादिश्रुतीनामप्युक्तविधनिर्वचनेन परमेश्वरगुणेषु तात्पर्याभावः स्यात् । न चैवम् । श्रुतीनां निर्वचनवैविध्येन परमेश्वरगुणप्रतिपादने एव तात्पर्यात् । तथा हि श्रुतिः- 'कश्छन्दसां योगमावेद धीरः' इति। वैदिकपदयोगवृत्तेरल्पबुद्धिभिर्दुर्ज्ञेयत्वमाक्षिपतीयं श्रुतिः ।

नन्वेवं तर्हि योगवृत्त्या प्रतिपदसमन्वयव्युत्पादनं न कर्तव्यम् । को धीरः छन्दसां योगं= ब्रह्मणि योगवृत्तिम् आवेद= जानाति ? न कोऽपीति निरधिकारिकत्वश्रवणात् । न हि गायमानो बधिराणां पुरतः गायतीति चेत् न। 'कश्छन्दसां योगमावेद' इत्यत्र 'कः' इत्यस्योभयार्थत्वं स्वीकृतम् । 'प्रजापतिर्वै कः' इति श्रुतेः कः= चतुर्मुखः । तथा च कः= चतुर्मुखः छन्दसां योगमावेदेति चतुर्मुखस्य योगवृत्तिज्ञाने सामर्थ्यकथनात् नानधिकारिकत्वम् । किंशब्दस्याक्षेपार्थत्वस्यापि स्वीकारेण चतुर्मुखादन्येषां वैदिकशब्दयोगवृत्तिज्ञाने सामर्थ्याभावकथनाच्च नानाविधयोगेन परब्रह्मगुणवाचकत्वं वैदिकपदानां सिद्ध्यति। योगवृत्तिज्ञाने जीवानामनधिकारादेव 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादिश्रुतीनां ब्रह्मणि वाक्यसमन्वयोऽप्यङ्गीक्रियते[३१] ।

ननु 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादिश्रुत्या साङ्गकर्मपरत्वस्यैवावगमो भवति, न लेशतोऽपि भगवत्परत्वस्य । तत्कथं ब्रह्मणो वाक्यार्थत्वमिति चेन्न । ब्रह्मज्ञानार्थत्वेन तदनुग्रहार्थत्वेन वा कर्मादेः

---

३१. अङ्गीकृतेऽपि नैवास्ति दोषो वाक्यसमन्वये। (अ.व्या.श्लो.३२२)

सम्भवात्। 'कर्मणा ज्ञानमातनोति' 'तत्कर्म हरितोषं यत् सा विद्या या विमुक्तये' इत्यादौ तथैव श्रवणात्। किञ्च 'खादिरो यूपो भवति। यूपं च्छिनत्ति। यूपं तक्षति। यूपमष्टास्रीकरोति' इत्यादीनां श्रुतिवाक्यानां न यूपरचनमात्रे तात्पर्यम्। तावन्मात्रस्य निष्फलत्वात्। किन्तु 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति सन्निहितवाक्यावगतस्य फलवज्ज्योतिष्ठोमादिकर्मणः इतिकर्तव्यतापराणि तानीति निश्चीयते। तद्वदेव सर्वस्यापि कर्मकाण्डस्य न कर्मानुष्ठानमात्रे तात्पर्यम्। कर्मणामल्पास्थिरफलत्वात्। किन्तु परमपुरुषार्थसाधकपरमात्मतत्त्वज्ञानार्थमेव श्रुतिभिः कर्माणि विधीयन्त इति वक्तव्यम्। 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादि-श्रुतेः। तथा च कर्मकाण्डगतवाक्यानामपि ब्रह्मपरत्वात् वाक्यसमन्वयोऽपि युक्त एव।

ननु मुख्ये प्रतिपदान्वये एव सम्भवति वाक्यान्वयः किमर्थम्? इति चेदत्रेदं समा-धानम्- प्रतिपदान्वये अभिहिते हि मन्दाधिकारिणां मोक्षमार्गवैमुख्यं स्यात्। यतः सर्वशब्दानां ब्रह्मणि मुख्यया वृत्त्या अन्वये ज्ञाते एव हि मोक्षः। अन्वयज्ञानं तावदशक्यम्। 'कश्छन्दसां योगमावेद' सति श्रुतिरपीदमेवाह। तथा च मोक्षोपायभूतस्य शब्दानां ब्रह्मणि योगज्ञानस्याशक्यत्वात् तत्र प्रवृत्तिरपि मन्दाधिकारिणां न युज्यते। अशक्ये आकाशरोमन्थनादौ प्रवृत्त्यदर्शनात्।

'व्यसनानि दुरन्तानि समव्ययफलानि च।
अशक्यानि च वस्तूनि नारभेत विचक्षणः॥'

इति सूक्तेश्च। 'तस्मादास्तामयमशक्यो मोक्षः। स्वर्गादिसाधनीभूत-यागाद्यनुष्ठानस्य तु शक्यत्वात् तदर्थमेव प्रवर्तेमहि' इति रीत्या मन्दलोकस्य

मोक्षमार्गवैमुख्यं स्यादिति भावेन मन्दाधिकारिणामुपायान्तरप्रदर्शनेन समाश्वासार्थं वाक्यान्वयकथनम् ।

इत्थञ्च सर्वेऽपि शब्दाः परमात्मानमेवाभिदधति। सर्वशब्दवाच्यत्वादेव सर्वगुणपूर्णोऽप्ययं परमात्मेति सिद्धान्तः ॥ अत एवैतत्सिद्धान्तानुसारि स्तोत्रञ्चेदं श्रुतिपथमायाति-

वेदाश्चोपनिषद्गणाश्च विविधाः साङ्गाः पुराणान्विताः
वेदान्ता अपि मन्त्रतन्त्रसहितास्तर्काः स्मृतीनां गणाः ।
काव्यालङ्कृतिनीतिनाटकयुताः शब्दाश्च नानाविधाः
श्रीविष्णोर्गुणनामकीर्तनपराः कुर्वन्तु नो मङ्गलम् ॥ इति[३२] ।

महाभारते च श्रूयते भीष्मोक्तिः विष्णुसहस्रनाम्नामुपदेशसन्दर्भे-

यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥ इति[३३] ।

अत्र गौणानीत्यस्य गुणसम्बन्धीति= गुणवाचकानीत्यर्थः। 'विष्णोः सहस्रनामापि निरन्तरशतार्थकम्'[३४] इत्युक्तत्वेन विश्वं विष्णुरित्याद्येकैकमपि नाम शताधिकान् गुणान् परमात्मन्यावेदयति ॥

### ३.१.४. सर्वशब्दानां भगवद्वाचकत्वे अनुपपत्तिपरिहारः -

भगवतः सर्वशब्दवाच्यत्वेऽङ्गीक्रियमाणे अनेका अनुपपत्तयः सन्दृश्यन्ते ।

---

३२. मङ्गलाष्टकम् - श्रीराजराजेश्वरतीर्थविरचितम् ।

३३. महाभारते अनुशासनपर्वान्तर्गतदानधर्मपर्वणि ।

३४. ऋग्भाष्यम् ।

सम्भवात्। 'कर्मणा ज्ञानमातनोति' 'तत्कर्म हरितोषं यत् सा विद्या या विमुक्तये' इत्यादौ तथैव श्रवणात्। किञ्च 'खादिरो यूपो भवति। यूपं च्छिनत्ति। यूपं तक्षति। यूपमष्टास्रीकरोति' इत्यादीनां श्रुतिवाक्यानां न यूपरचनमात्रे तात्पर्यम्। तावन्मात्रस्य निष्फलत्वात्। किन्तु 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति सन्निहितवाक्यावगतस्य फलवज्ज्योतिष्ठोमादिकर्मणः इतिकर्तव्यतापराणि तानीति निश्चीयते। तद्वदेव सर्वस्यापि कर्मकाण्डस्य न कर्मानुष्ठानमात्रे तात्पर्यम्। कर्मणामल्पास्थिरफलत्वात्। किन्तु परमपुरुषार्थसाधकपरमात्मतत्त्वज्ञानार्थमेव श्रुतिभिः कर्माणि विधीयन्त इति वक्तव्यम्। 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादि-श्रुतेः। तथा च कर्मकाण्डगतवाक्यानामपि ब्रह्मपरत्वात् वाक्यसमन्वयोऽपि युक्त एव।

ननु मुख्ये प्रतिपदान्वये एव सम्भवति वाक्यान्वयः किमर्थम्? इति चेदत्रेदं समा-धानम्- प्रतिपदान्वये अभिहिते हि मन्दाधिकारिणां मोक्षमार्गवैमुख्यं स्यात्। यतः सर्वशब्दानां ब्रह्मणि मुख्यया वृत्त्या अन्वये ज्ञाते एव हि मोक्षः। अन्वयज्ञानं तावदशक्यम्। 'कश्छन्दसां योगमावेद' सति श्रुतिरपीदमेवाह। तथा च मोक्षोपायभूतस्य शब्दानां ब्रह्मणि योगज्ञानस्याशक्यत्वात् तत्र प्रवृत्तिरपि मन्दाधिकारिणां न युज्यते। अशक्ये आकाशरोमन्थनादौ प्रवृत्त्यदर्शनात्।

'व्यसनानि दुरन्तानि समव्ययफलानि च।
अशक्यानि च वस्तूनि नारभेत विचक्षणः॥'

इति सूक्तेश्च। 'तस्मादास्तामयमशक्यो मोक्षः। स्वर्गादिसाधनीभूत-यागाद्यनुष्ठानस्य तु शक्यत्वात् तदर्थमेव प्रवर्तेमहि' इति रीत्या मन्दलोकस्य

मोक्षमार्गवैमुख्यं स्यादिति भावेन मन्दाधिकारिणामुपायान्तरप्रदर्शनेन समाश्वासार्थं वाक्यान्वयकथनम् ।

इत्थञ्च सर्वेऽपि शब्दाः परमात्मानमेवाभिदधति। सर्वशब्दवाच्यत्वादेव सर्वगुणपूर्णोऽप्ययं परमात्मेति सिद्धान्तः ।। अत एवैतत्सिद्धान्तानुसारि स्तोत्रञ्चेदं श्रुतिपथमायाति-

वेदाश्चोपनिषद्गणाश्च विविधाः साङ्गाः पुराणान्विताः
वेदान्ता अपि मन्त्रतन्त्रसहितास्तर्काः स्मृतीनां गणाः ।
काव्यालङ्कृतिनीतिनाटकयुताः शब्दाश्च नानाविधाः
श्रीविष्णोर्गुणनामकीर्तनपराः कुर्वन्तु नो मङ्गलम् ।। इति[३२] ।

महाभारते च श्रूयते भीष्मोक्तिः विष्णुसहस्रनाम्नामुपदेशसन्दर्भे-

यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ।। इति[३३] ।

अत्र गौणानीत्यस्य गुणसम्बन्धीति= गुणवाचकानीत्यर्थः। 'विष्णोः सहस्रनामापि निरन्तरशतार्थकम्'[३४] इत्युक्तत्वेन विश्वं विष्णुरित्याद्येकैकमपि नाम शताधिकान् गुणान् परमात्मन्यावेदयति ।।

### ३.१.४. सर्वशब्दानां भगवद्वाचकत्वे अनुपपत्तिपरिहारः -

भगवतः सर्वशब्दवाच्यत्वेऽङ्गीक्रियमाणे अनेका अनुपपत्तयः सन्दृश्यन्ते ।

---

३२. मङ्गलाष्टकम् - श्रीराजराजेश्वरतीर्थविरचितम्।

३३. महाभारते अनुशासनपर्वान्तर्गतदानधर्मपर्वणि।

३४. ऋग्भाष्यम्।

अ) अखिलशब्दानां ब्रह्मवाचकत्वमिति न युज्यते । निर्वचनानुपपत्तेः । शब्दस्यैकस्यैकत्र निर्वचनं तदैव कर्तुं शक्यते यदा निरुच्यमानपदवाच्यार्थव्यतिरिक्तार्थप्रतिपादकत्वं तदवयवानां स्यात् । एकस्यैव सर्वशब्दवाच्यत्वे कथं निर्वचनम् । न हि जातमोतिरित्यादिशब्दानामन्यपरत्वानङ्गीकारे जातमोतिर्यस्मिन् स ज्योतिरिति व्युत्पत्तिः सम्भवति । अतः प्रकृतिप्रत्ययादीनामवश्यमन्यपरत्वमूरीकरणीयम् । सति तु तथा सर्वशब्दानां भगवद्वाचित्वमिति गतः पक्षः ।

आ) किञ्च 'वसन्ते वसन्ते...' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादीनां भगवत्परत्वे ज्योतिष्ठोमादिप्रापकवाक्यान्तराभावेन कर्मानुष्ठानविलोपप्रसङ्गः ।

इ) कथञ्चेत्थमव्यक्तगच्छभुङ्क्ष्वेत्यादिशब्दानां भगवति समन्वयः । तेषामन्यत्रैव प्रसिद्धत्वात् ।

ई) अपि चैतन्मते भगवदवाचकस्य शब्दस्यैव लोकेऽभावेन 'स्नाहि भुङ्क्ष्व' इत्याद्युच्चरितशब्दमात्रस्य भगवद्वाचित्वात् स्नानभोजनशयनादिलोकव्यवहार एव विलुप्येत । अमुख्यवृत्त्या लौकिकार्थस्याप्यङ्गीकारे लोकव्यवहारमात्रस्य लाक्षणिकत्वं वा स्यादित्यादि विप्लवप्रसङ्गः । इति चेत्-

नैता अनुपपत्तयः द्वैतसिद्धान्तं स्पृशन्ति । 'चमसवदविशेषात्' 'ज्योतिरुपक्रमात्तथा ह्यधीयत एके' 'कल्पनोपदेशाच्च मध्वादिवदविरोधः'[३५] इत्यादिसूत्रेषु सूत्रकारेणैवैता अनुपपत्तयो निष्कासिताः ।

---

३५. ब्र.सू - १-४-९, ब्र.सू. - १-४-१०, ब्र.सू. - १-४-११ ।

सुव्यक्तश्चैतत्तत्त्वप्रकाशिकादीपिकादौ[३६]। किञ्चैतासामनुपपत्तीनां परिहारार्थमेव परममुख्यवृत्तिः, मुख्यवृत्तिरित्यादयो वृत्तिप्रभेदा अप्यङ्गीकृताः। सप्तविधवृत्तीनां सिद्धान्तितत्त्वेनैवैता अनुपपत्तयः परिहृता इति यावत्।

तदयं परिहारसारः - अस्थाने निक्षिप्तोऽयं व्यवहारानुपपत्त्यादिप्रसङ्गः। सर्वशब्दानां भगवद्वाचिनामपि लोकप्रसिद्धार्थान्तरवाचकत्वस्यापि स्वीकारात्। ज्योतिरादिशब्दानां हिं परममुख्यवृत्त्या विश्वम्भरवाचकत्वेऽपि मुख्यवृत्त्या ज्योतिष्ठोमाद्यर्थत्वस्याङ्गीकृतत्वान्न कर्मानुष्ठानविलोपप्रसङ्गः। ज्योतिरित्यादिसमस्तवाक्ये अवयवभूतानां प्रकृतिप्रत्ययादीनां भगवद्वाचिनामपि तदितरपरत्वमप्यङ्गीकृतमिति न निर्वचनानुपपत्तिः। तथा च जातमोतमित्यादीनामपि प्रत्येकं भगवद्वाचित्वात् न सर्वशब्दवाच्यत्वभङ्गः। परमात्मनि परममुख्यवृत्तिः, अन्यत्र तु मुख्यवृत्तिरिति रीत्या मुख्यवृत्त्यैव भगवदितरवाचकत्वात् न लोकव्यवहारमात्रस्य लाक्षणिकत्वप्रसङ्गः।

ननु स्यादेतदेवं यदि ज्योतिरादिशब्दानामनेकार्थत्वं स्यात्। तदेव कुतः? इति चेत्- उच्यते। ज्योतिरव्यक्तगच्छभुङ्क्ष्वेत्यादिपदानां ज्योतिष्टोमादितत्तत्पदार्थवाचित्वं व्यवहारादिनिर्वाहार्थमवश्यमभ्युपेयम्। परमेश्वरवाचित्वं कुत इत्यत्रैव प्रश्नः पर्यवस्यति। तत्र तूक्तमेव। 'नामानि सर्वाणि यमाविशन्ति' ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्'[३७] इत्याद्युपदेशबलात् तत्तच्छब्दानां परमेश्वरवाचित्वं अवश्यमभ्युपेयमिति।

---

३६. सूत्रभाष्यटीका ३७. ऐ.आ. (२-२-२)

न केवलं श्रुत्युपदेशबलादेवं, लिङ्गवाक्यप्रकरणसमाख्यादिसामर्थ्याच्चेति ध्येयम्। 'शब्दादेव प्रमितः'[३८] 'आकाशस्तल्लिङ्गात्'[३९] 'अत्ता चराचर-ग्रहणात्' 'प्रकरणाच्च'[४०] इत्यत्र क्रमेण श्रुतिलिङ्गप्रकरणेभ्यः शब्दानां परमेश्वरे समन्वयसाधनात्। तदेतत्सर्वमभिप्रेत्योक्तमनुव्याख्याने -

तेषु तेषु पदार्थेषु वृत्तिरङ्गीकृता यतः।
प्रयोजनबहुत्वेन तस्य तस्याविरोधतः।
उपदेशादिसामर्थ्याद्विष्णौ शक्तिश्च गृह्यते ॥[४१] इति।

ननु शब्दानां परमेश्वरपराणां प्रसिद्धतत्तत्पदार्थपरत्वश्चाङ्गीकृतम्। एवं सर्वशब्दानामुभयार्थत्वे 'ज्योतिषा यजेत' इत्यादौ निर्वाहेऽपि 'विश्वस्मादिन्द्र उत्तरः' इत्यादौ कथम्? अत्र हीन्द्रशब्दस्य पुरन्दरपरत्वं विष्णुपरत्वश्चाङ्गीकार्यम्। नैतत्सम्भवति। 'सर्वस्मादुत्तरः' इति शब्द-प्रतिपादितसर्वोत्तमत्वस्योभयोरसम्भवात्। ननु पदानामुभयार्थवाचित्वे यत्र विरोधस्तत्रैकोऽर्थः परित्यज्यते। निरपवादस्थले एवोभयार्थस्वीका-रादिति चेत्- तथापि कोऽर्थः परित्याज्यः? कश्च स्वीकार्यः? इत्यत्र नियामकं वक्तव्यमिति चेत्- अत्र ब्रूमः। उभयपरत्वविरोधे सति अन्यपरत्वमेवापोद्यते। नतु विष्णुपरत्वम्। 'नामानि सर्वाणि यमाविशन्ति' इत्यादि वाक्यान्तरेण विष्णौ वाक्यतात्पर्यस्य निश्चितत्वात्। 'परो मात्रया तन्वा वृधान' इत्यादि विष्णुसर्वोत्तमत्वप्रतिपादकवाक्यविरोधश्च। अतः परिशेषात् इतरपरत्वमेव परित्यज्यते। यत्र तु पदानामुभयार्थवाचित्वे न विरोधस्तत्रैव परममुख्यवृत्त्या परमात्मवाचित्वम्, मुख्यवृत्त्या तदितर-

---

३८. ब्र.सू. (१-१-१२) ३९. अ.व्या. (श्लो.३३४)
४०. ब्र.सू. (१-३-२४) ४१. ब्र.सू. (१-२-९)

वाचित्वञ्चोपेयते । तथा च 'विश्वस्मादिन्द्र उत्तरः' 'हिरण्यगर्भः समवर्तताग्रे' इत्यादौ इन्द्रहिरण्यगर्भादिशब्दैर्विष्णुरेव गीयत इति न विरोधः।

### ३.१.५. इन्द्रादिशब्दानां विष्णावेव परममुख्यत्वम् -

नन्विन्द्रादिशब्दाः पुरन्दरादिष्वपि रूढियोगाभ्यां प्रवृत्ताः । रूढेः 'इन्द्रो मरुत्वान् मघवा बिडौजाः'[४२] इत्याद्यभिधानसिद्धत्वात् । योगनिमित्तस्य परमैश्वर्यस्य च तत्र सत्त्वात्[४३] । रूढियोगयोश्च मुख्यवृत्तिरिति व्यवहारः । तथा च सैन्धवादिशब्दानामिवेन्द्रादिशब्दानामपि उभयं मुख्याभिधेयमुचितम् । सैन्धवादिशब्दानामश्वलवणयोर्यथा मुख्यैव वृत्तिस्तद्वदत्रापीन्द्रशब्दस्य परमेश्वरपुरन्दरयोर्न कापि वृत्तितारतम्यमिति परममुख्यवृत्तिर्मुख्यवृत्तिरिति चेति भेदः कथम्? इति चेत्- क्षणं प्रतीक्षताम् । इन्द्रादिशब्दानां पुरन्दरादावपि मुख्यवृत्तित्वेनाभिमतरूढियोगावुभावपि स्त इति यदुक्तं तदवितथमेव । तथाप्यस्त्यत्र तारतम्यम् । इन्द्रादिशब्दानां भगवति यथाऽनुपचरितान्यानपेक्षरूढियोगौ स्तः न तथा पुरन्दरादिषु । यतो हि- पुरन्दरादीनामिन्द्रादिशब्दरूढिविषयता येयं वर्तते सा परमेश्वरायत्तैव । परमेश्वरापेक्षयैवान्यत्र शब्दप्रवृत्तिरिति यावत् । एवं पुरन्दरादीनां इन्द्रादिशब्दयोगविषयत्वेऽपि परमेश्वरस्यैवोपजीव्यत्वम् । स्वत एवान्यानपेक्षानवधिकैश्वर्यादिमति परमात्मन्येवेन्द्रादिशब्दानां योगरूढी । पुरन्दरादिषु तु तादृशो विष्णुः सन्निहितो वर्तते, तदायत्तं च त्रैलोक्याधिपत्यादिरूपं परमैश्वर्यं तेषु वर्तत इत्येवेन्द्रशब्दस्य योगरूढी । सर्वान्तर्यामिणो परमैश्वर्यविशिष्टस्य विष्णोः

---

४२. अ.को. (श्लो. ६१)

४३. इन्द्रशब्दस्य 'इदि परमैश्वर्ये' इति धातुना निष्पन्नत्वात् ।

इन्द्रे विशेषसन्निधानेनैव तत्रेन्द्रशब्दस्य रूढिः । तदायत्तेन्द्रशब्दप्रवृत्ति-निमित्तवत्त्वादेव योग इति यावत् । अत एव ते नेश्वरे इव परममुख्ये । किन्तु ततोऽमुख्ये एव । प्रसिद्धश्चैतत् - यत् यत्सन्निधानात् यच्छब्दप्रतिपाद्यं तत्तच्छब्दं प्रति ततोऽमुख्यप्रतिपाद्यम्, अन्यत्तु मुख्यमिति । यथा - दग्धृशब्दस्यायःपिण्डो वह्निश्च । तप्तायःपिण्डे हि दग्धृशब्दस्य प्रवृत्तिः, दाहकर्तृत्वरूपयोगार्थवत्ता च वह्निसान्निध्यादेवेति वह्नावेव दग्धृशब्दो योगरूढिभ्यां मुख्यः, अयःपिण्डे त्वमुख्यः । एवं विष्णुसन्निधानादेव पुरन्दरस्येन्द्रशब्दरूढियोगाविति विष्णावेवेन्द्रादिशब्दानां योगरूढी परममुख्ये ; पुरन्दरादिषु तु ते ततोऽमुख्ये ।

इदमुक्तं भवति । सैन्धवादिशब्दानां समानयैव वृत्त्या नानार्थत्वमुचितम् । अश्वलवणयोः शब्दप्रवृत्तिनिमित्तादेः परस्परापेक्षाया अभावात् । अत्र त्विन्द्रशब्दार्थस्य पुरन्दरे इतरापेक्षास्तीति न मुख्यवृत्त्यैवोभय-प्रतिपादनं युक्तमिति ।

नन्वन्यसापेक्षप्रवृत्तिः शब्दानाममुख्यार्थत्वे हेतुत्वेनोक्ता । तर्हीश्वरस्याप्यमुख्यत्वं प्रसक्तम् । अर्थान्तरापेक्षयैव तत्र शब्दप्रवृत्तेः । न खलु जातादिशब्दानामन्यार्थतामनपेक्ष्य ज्योतिषेत्यादिशब्दानां भगवति प्रवृत्तिः सम्भवतीति चेत्- किञ्चिदत्र सूक्ष्मेक्षिकया द्रष्टव्यम् । परमपुरुषे तत्तच्छब्द-प्रवृत्तिप्रतीतेरेवार्थान्तरापेक्षा, न तु तत्तच्छब्दप्रवृत्तेः । यथा- घटरूप-प्रतीतिरेव प्रदीपापेक्षा । न तु घटरूपम् । न हि घटस्य रूपं प्रदीपापेक्षया प्रतीयत इत्येतावता रूपमपि प्रदीपायत्तं भवति । यथाऽन्यत्र शब्दप्रवृत्तिरेव परमेश्वरापेक्षा, तथा परमात्मनि प्रवृत्तावितरापेक्षां कामपि नैवेक्षामहे ।

किञ्च परमेश्वरे शब्दानां वृत्तिप्रतीतौ या अर्थान्तरापेक्षा साऽपि

भगवदिच्छानिबन्धनैव । भगवदिच्छानधीनस्य जगत्यभावात् । लीलानिमित्तं स्वेच्छया किञ्चिदुपाददानो हि परमपुरुषः न तदायत्तो भवति । पटुकरणः पुरुषः लीलानिमित्तमिच्छया दण्डमवष्टभ्य गच्छन्नपि न हि दण्डायत्तगतिर्भवति। इत्थञ्च परमेश्वरे शब्दानां वृत्तावर्थान्तरापेक्षाऽस्तीति स्वीकारेऽपि पटुकरणस्य स्वेच्छया दण्डाद्यपेक्षावत् ईश्वरेण स्वेच्छयैव अर्थान्तरमपेक्षितमिति न तावता शब्दानाममुख्यत्वप्रसङ्ग इति परमेश्वरे इन्द्रादिशब्दानां परममुख्यवृत्त्यङ्गीकारे न काप्यनुपपत्तिः ।।

## ३.१.६. परममुख्यवृत्तिः, मुख्यवृत्तिश्च -

ननु दग्धृशब्दस्यायसीवेन्द्रादिशब्दानां पुरन्दरादिषु हरिसन्निध्यादिना वृत्तिरिति प्रतिपादितम् । दग्धृशब्दस्यायसि तु मुख्यार्थसम्बन्धेन लक्षणा स्वीकृता । यदि तद्वदेवेश्वरादन्यत्र शब्दानां लक्षणैव स्वीक्रियेत तदा प्रवाहतीरयोरुभयोरपि गङ्गापदलक्ष्यत्वमिति स्यात् । न चेष्टापत्तिः । प्रवाहस्य गङ्गापदमुख्यार्थत्वं, तीरस्य चामुख्यार्थत्वमिति विशेषस्य सर्वसम्मतत्वात् । तथा च कथमयं प्रसङ्गो वारणीय इति चेत् नायं प्रसङ्गः। दग्धृशब्दस्यायसीवेन्द्रादिशब्दानां पुरन्दरादिषु न लक्षणैव । येनोक्तातिप्रसङ्गः स्यात् । किन्तु परमेश्वरे परममुख्यवृत्तिः, पुरन्दरादौ मुख्यवृत्तिरिति मुख्यवृत्तावेव विभागोऽभिधीयते ।

तत्रेदं कारणम् - इन्द्रादिशब्दस्य योगस्तावत् पुरन्दरे विष्णौ च वर्तते । योगनिमित्तस्य परमैश्वर्यादेरुभयत्र सद्भावात् । रूढिश्चोभयत्र वर्तते । अभिधानादिसिद्धत्वात् । न चेश्वरे इन्द्रादिशब्दरूढिरसिद्धेति वाच्यम् । विद्वद्रूढेरुपपादनेन समाधास्यमानत्वात् । इत्थञ्च रूढियोगयोरुभयत्र सत्त्वादुभयोरपि मुख्यार्थतायां नास्ति विवादः । किन्तु परमेश्वर-

विषययोः रूढियोगयोरपराधीनत्वनिरङ्कुशत्वाभ्याम्, अन्यत्र पुरन्दरादौ तु तदधीनत्वाल्पत्वाभ्यां मुख्यार्थतायामेव मुख्यामुख्यविभागोऽभिधीयते। विष्णुः परममुख्यार्थः, पुरन्दरादिस्तु मुख्यार्थः इति। तदुक्तमाचार्यैः 'तस्मात्परममुख्यत्वं विष्णावन्यत्र मुख्यता' इति[४४]। परममुख्यत्वं विष्णौ, अन्यत्र मुख्यतेति तदर्थः।

### ३.१.७. परममुख्यवृत्तिप्रभेदाः -

महायोगः, महायोगरूढिश्चेति सा द्विविधा। निरवधिकं स्वतन्त्रं वा प्रवृत्तिहेतुमपेक्ष्य या शब्दवृत्तिः सा महायोगलक्षणा परममुख्यवृत्तिः[४५]।

निर्वचनलभ्योऽर्थः प्रवृत्तिहेतुः। इन्द्रज्योतिषादिशब्दानां विष्णौ महायोगः। तत्र प्रवृत्तिनिमित्तस्य परमैश्वर्यविश्वम्भरत्वादेः स्वतन्त्रस्य निरवधिकस्य च विष्णावेव सत्त्वात्।

यत्रार्थे प्रवृत्तिहेतोरनवधिकत्वं तत्रैव प्रयोगबाहुल्यं स्याच्चेत् सा वृत्तिः महायोगरूढिनाम्नी परममुख्यवृत्तिः। अनवधिकप्रवृत्तिनिमित्तवति यत्रार्थे यस्य शब्दस्य प्रयोगबाहुल्यमस्ति तस्य तत्र महायोगरूढिरिति यावत्। विष्णुनारायणादिशब्दाः परब्रह्मणि महायोगरूढाः। अत्र प्रवृत्तिहेतोर्व्याप्तत्वाशेषगुणत्वादेरनवधिकस्याश्रयीभूते परमेश्वरे एवैतेषां शब्दानां बहुलप्रयोगस्यापि सत्त्वात्।

ननु किमत्र प्रयोगबाहुल्यमात्रं लक्षणम्, उतानवधिकप्रवृत्तिनिमित्तविशेषितम्? नाऽऽद्यः। तस्य रूढिमात्रत्वात् परममुख्यत्वायोगात्[४६]।

४४. अ.व्या. (श्लो.३३७)

४५. प्रवृत्तिहेतोर्बाहुल्यं ज्ञेयं परममुख्यता। (अ.व्या.श्लो-३३८)

४६. 'प्रयोगमात्रबाहुल्यं रूढिरित्यभिधीयते।' (अ.व्या.३३९) इत्युक्तत्वात्।

अन्यथा रूढानां घटादिपदानामपि घटादौ बहुलप्रयोगवत्त्वेन परममुख्य-ताऽऽपत्त्या जगत्यपि परममुख्यवृत्तिप्रसङ्गेन 'तस्मात्परममुख्यत्वं विष्णा-वन्यत्र मुख्यता' इति विष्णावेव परममुख्यत्वमिति सिद्धान्तहानेः ।

अनवधिकप्रवृत्तिनिमित्तविशेषितं प्रयोगबाहुल्यमिति द्वितीयेऽपि किं परममुख्यतासिद्धये प्रयोगबाहुल्योपादानं किं वा महायोगरूढि-रूपविधान्तरसिद्धये तत्? नाऽद्यः । अनवधिकप्रवृत्तिनिमित्तेनैव परम-मुख्यत्वे सम्भवति विशेष्यवैयर्थ्यात् । नापि द्वितीयः । समाहारमात्रेण विधान्तरसिद्ध्ययोगात् । तथा सति असिद्धिबाधसमाहारस्यापि हेत्वाभासान्तरत्वप्रसङ्गः । तथा च विकल्पासहत्वात् कथं महायोगरूढेः पृथक्त्वेनोक्तिरिति चेत्- अनवधिकप्रवृत्तिनिमित्तविशेषितं प्रयोगबाहुल्य-मेव महायोगरूढिरिति द्वितीयपक्ष एवाश्रीयते । न च विशेष्यवैयर्थ्यम् । स्यादिदं यदि परममुख्यतासिद्धये विशेष्योपादानमभिमतं स्यात् । न चैवम् । किन्तु अस्याः विधान्तरत्वसिद्धये तदुपात्तम् । न च विशेषणमात्रेण विधान्तरत्वं सिद्ध्यतीति तत्सिद्धये विशिष्टोपादानमर्थवत् । तथा चात्र महायोगस्य रूढेश्चोभयोरपि सत्त्वकथनेन परममुख्यवृत्तौ तारतम्यलाभात् महायोगादन्या ततोऽप्युत्कृष्टा परममुख्यताऽस्तीति भावः ।

नन्वेवं सत्त्युक्त एवातिप्रसङ्गः असिद्धिबाधसमाहारोऽप्यपरो हेत्वा-भासः स्यादितीति चेन्न । वैषम्यात् । तत्र ह्येकेनैव दोषेणोद्देश्यभूतः दुष्टत्वबोधः सिद्ध्यति । उद्देश्यभूते दुष्टत्वबोधे असिद्धिबाधयोः परस्परा-नपेक्षतया तत्समाहाररूपदोषान्तरस्य कल्पको नास्ति । अतस्तस्य समा-हारस्य न दोषान्तरत्वम् । प्रकृते तु नारायणादिशब्देभ्यः उद्देश्यस्य 'पूर्णगुणो विष्णुः' इति विशिष्टबोधस्य परस्परानपेक्षाभ्यां प्रवृत्तिनिमित्त-

निरवधिकत्वप्रयोगबाहुल्याभ्यामसिद्ध्या उद्देश्यसिद्धौ परस्परसापेक्षत्व-नियमेन कल्पकसद्भावात् विधान्तरत्वसिद्धिरित्याशयात् ।

नन्वेवं महायोगरूढिरूपवृत्तिसिद्धावपि न महायोगरूपवृत्त्यन्तर-सिद्धिसम्भवः । महायोगरूढ्यामेव तस्यान्तर्भूतत्वेन पृथक्त्वायोगादिति चेन्न । स्यादेवमस्य तस्यामेवान्तर्भावः यदि निरवधिकं स्वतन्त्रं वा प्रवृत्ति-निमित्तमपेक्ष्य शब्दस्य प्रतिपादकत्वमात्रं महायोगः स्यात् । न चैत-दस्ति । अतिबहुलप्रयोगाभावविशेषितमेव तन्महायोगः । तस्य च न महायोगरूढिलक्षणायां वृत्तावन्तर्भावः सम्भवतीति युक्तं परममुख्यवृत्तेः द्वैविध्यम् ।

ननु लोके योगो रूढिर्योगरूढिरिति मुख्यवृत्तित्रयस्य विद्यमानत्वात् हरावपि महायोग-महारूढि-महायोगरूढिभेदेन त्रैविध्यं न्यायप्राप्तम् । किमिति महारूढेः परित्यागः । न्यायविवरणे तु तदङ्गीकृतमिव भाति । तथा हि तत्रोक्तम्- 'रूढो, रूढयोगो, महारूढो, महायोगो, महारूढ-योगो, रूढोपचारो, रूढलक्षणोपचारो लक्षणेति शब्दवृत्तिभेदात् रूढिपूर्वकत्वेन महायोगवृत्त्या परमेश्वरेऽखिलशब्दव्युत्पत्त्युपपत्तिः'[४७] इति । तथा च किमिति महारूढिर्नाङ्गीकृता? इति चेत् अस्त्येव शब्दानां महारूढिरिति वृत्तिभेदः परमात्मनि । किन्तु विद्वद्रूढिरित्यपराभिधाना सा न पृथक्त्वेनाङ्गीक्रियते । तस्या योगाविनाभूतत्वेन महायोगरूढ्या-मेवान्तर्भावात् । 'विद्वद्रूढिर्वैदिका स्यात्सा योगादेव लभ्यते'[४८] इत्युक्त-दिशा योगाविनाभूतत्वात्तस्याः । तथा च विद्वद्रूढेः (महारूढेः) योगा-

---

४७. न्या.वि. पृ.सं. ५३ (स.मू.ग्रन्थाः- सूत्रप्रस्थानम्)

४८. अ.व्या - (श्लो- २४१)

विनाभूतत्वेन महायोगरूढित्वस्यैव प्राप्त्या न तदपेक्षया महारूढिमात्रस्य वृत्त्यन्तरत्वसम्भवः ।

यद्यपि न्यायविवरणे महारूढिः वृत्त्यन्तरत्वेन पठितेति दर्शितम् । तथाऽपि न तथा मन्तव्यम् । 'सा योगादेव लभ्यत' इत्यादिना विरोधात् । अत एव न्यायविवरणे पाठव्यत्यासो दृश्यते । प्रप्रथमं सर्वमूलग्रन्थानां संशोधने कृतयत्नैः विद्वद्भिः विद्यावाचस्पतिबन्नञ्जेगोविन्दाचार्यैः टिप्पण्यामिदमुक्तम् - 'प्र.पाठे 'महारूढः' इत्येतन्नास्ति' इति[४९] । रघुवर्यतीर्थविरचितन्यायविवरणभावबोधाख्यव्याख्यया साकं मुद्रापिते न्यायविवरणमूले 'महारूढः' इति न दृश्यते । नापि च स शब्दो व्याख्यातः[५०] । एतावता जानीमो न्यायविवरणे महारूढ इति शब्दो नास्ति । दृश्यमानश्च सः प्रमादपतित इति ।

इत्थञ्च परममुख्यवृत्तिर्द्विविधैव । महायोगः, महायोगरूढिश्चेति । निरवधिकप्रवृत्तिनिमित्तापेक्षत्वे सति अतिबहुलप्रयोगशून्यत्वं महायोगत्वम् । तादृशमहायोगसापेक्षाखण्डवृत्तित्वं महायोगरूढित्वम् । नारायणादिशब्दानां महायोगरूढिः । तदितरेषां इन्द्राग्न्यादिशब्दानां गच्छभुङ्क्ष्वदुःखिहुंफट्प्रभृतीनाञ्च सर्वेषां महायोगः ।

## ३.१.८. भगवतः सर्वशब्दवाच्यत्वे प्रमाणानि -

ननु मानाधीना खलु मेयसिद्धिः । किं मानं सर्वशब्दैर्मुख्यवृत्त्या वाच्यं

---

४९. पश्यत - न्यायविवरणं, स.मू.ग्रन्थाः - सूत्रप्रस्थानम् पृ.सं. ५३

५०. पण्डितरामकृष्णाचार्येण उडुपिनगरस्थप्रभाकरमुद्रालये मुद्रापिते सटीकन्यायविवरणे पृ.सं. ३० । (शा.शक.१८३९)

ब्रह्मेत्यत्रेति चेत् - उक्ता खल्वत्र श्रुतयः स्मृतयश्च किं विस्मृताः? ननु स्मर्यन्त एव ताः*, किन्तु न हि तासु मुख्यवृत्त्या प्रतिपाद्यत्वं ब्रह्मण उक्तम्। अमुख्यवृत्त्यङ्गीकारेणैवोपपत्तेरिति चेत्- अत्रोच्यते। भगवतः सूत्रकारस्य मुख्यवृत्त्या सर्वशब्दसमन्वय एवाभिमतः। शास्त्रसन्दर्भं तावत् पश्यतु। 'ॐ अथातो ब्रह्मजिज्ञासा' इति प्रथमसूत्रे ब्रह्मशब्देन जिज्ञास्यस्य सकलगुणपूर्णत्वं जीवादिव्यावृत्त्यर्थं लक्षणमुपात्तम्। 'जन्माद्यस्य यतः' इति द्वितीयसूत्रेण गुणपूर्णत्वसिद्धये जगज्जन्मादिकारणत्वं भगवतो लक्षणं प्रोक्तम्। अतः सूत्रद्वयेन साध्यतया आनन्दादिगुणपूर्णत्वं साधनतया च जगज्जन्मादिकारणत्वं प्रकृतम्। उभयत्रापि लक्षणेऽनुमानादिना अतिव्याप्तौ शङ्कितायां लक्षणदार्ढ्यार्थं 'शास्त्रयोनित्वात्' इति सूत्रे शास्त्रैकप्रमाणकत्वमुक्तम्। शास्त्रस्य चान्यपरत्वशङ्कायां तत्तु समन्वयादिति सर्वेषामेव शब्दानां भगवत्यन्वयः प्रतिज्ञातुमुचितः। न कतिपयशब्दानाम्। सर्वशब्दानामन्वय एव हि गुणसर्वस्ववेदको भवति; न कतिपयानाम्। अतः सर्वशास्त्रात् गुणपूर्तिसिद्धये सर्वशब्दसमन्वय एव प्रतिज्ञातव्यश्चतुर्थसूत्रे। अन्यथा यस्यैव शब्दस्य समन्वयो भगवति न प्रतिपाद्यते तदर्थभूतो गुणो भगवति न सिद्ध्येत्। अतः सर्वशब्दसमन्वय एव समन्वयसूत्रे प्रतिज्ञातः। समन्वयश्च नामुख्यवृत्त्या। अमुख्यवृत्तौ तदभिधेयगुणालाभप्रसङ्गात्। तथा च 'तत्तु समन्वयात्' इति सूत्रे ब्रह्मणो गुणपूर्णत्वसिद्ध्यर्थं मुख्यया वृत्त्या सर्वशब्दानामन्वयः प्रतिज्ञात इत्यवश्यमभ्युपेयम्। प्रतिज्ञाते च सूत्रकारेण मुख्यया वृत्त्या सर्वशब्दसमन्वये तत्प्रपञ्चन-

* ताः = परममुख्यवृत्तिस्वीकारे निमित्तपर्यालोचनावसरे उक्ताः नामानि सर्वाणि यमाविशन्तीत्याद्याः।

मेवोत्तरत्र समस्तेनाध्यायेन कृतमिति सूत्राण्येवात्र मुख्यया वृत्त्या सर्वशब्दवाच्यत्वे मानम्।

अत एव 'सर्वाणि नामानि यमाविशन्ति' इति श्रुतौ 'आङ्' इत्यनेन अञ्जसेत्यर्थ-प्रतिपादनात् सर्वाणि नामानि आ= अञ्जसा= मुख्यया वृत्त्या यं= परमात्मानं विशन्तीत्यर्थ आश्रीयते।

किञ्च 'तं यच्छतं वर्षाण्यभ्यार्चत्तस्माच्छतर्चिनस्तस्माच्छतर्चिन इत्याचक्षत एतमेव सन्तं स यदिदं सर्वं मध्यतो दधे यदिदं किञ्च तस्माद् मध्यमास्तस्मान्मध्यमा इत्याचक्षत एतमेव सन्तम्' इत्यदिका श्रुतिरपि योगवृत्तिमपि ब्रह्मणि प्रदर्शयन्ती शतर्च्यादिशब्दोपलक्षितानां सर्वशब्दानां परब्रह्मविषयां विद्वद्रूढिं दर्शयति। आचक्षत इत्युक्तत्वात्। विद्वांस आचक्षत इति हि तदर्थः। किञ्चात्र सन्तमिति वचनात् एतमेवेत्यवधारणाच्च लोकरूढितो भगवद्विषयस्य योगस्य प्राबल्यं दर्शयति श्रुतिः। शतर्च्यादि-नाममुख्यार्थं सन्तं एतमेव= परमात्मानमेवोक्तेन योगेन शतर्च्यादिशब्द-वाच्यमाचक्षते विद्वांसः, रूढार्थान् मधुच्छन्दः प्रभृतीन्स्तु अमुख्यतः ; इत्यस्यार्थस्य पदद्वयसामर्थ्येन (एव,सन्तम्) प्रतीतेः। सन्तमित्यनेन हि यथा अगङ्गां गङ्गेत्याचक्षते न तथा परमात्मानं किन्तु शतर्च्यादिवाच्यत्वेन सन्तमेवेति मुख्यार्थतोच्यते। अवधारणेन तु परमात्मसमकक्षतया वाच्यत्वप्रतिषेधो ज्ञायते। इत्थञ्चेयमपि श्रुतिरुक्तार्थे मानम्। 'सर्वे वेदा यत्पदमामनन्ति' 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः' 'यमिन्द्र-माहुर्वरुणं यमाहुः' इत्याद्या अप्युक्तार्थे मानम्।

किञ्च 'अ इति ब्रह्म' इति श्रुतावकारस्य ब्रह्मवाचकत्वमभिहितम् । इतिग्रहणसामर्थ्यात् । ऐक्यपरत्वे तु 'अ ब्रह्म' इत्येतावता पूर्तेः । 'अकारो वै सर्वा वाक्' इति श्रुतौ तु सर्वेषां शब्दानामकारव्याख्यानता च कथिता । आपाततः प्रतीयमानस्यैक्यार्थस्य प्रत्यक्षादिविरुद्धत्वेन लक्षणाश्रयणस्यावश्यकत्वात् । इत्थञ्च 'अ इति ब्रह्मेति अकारस्य ब्रह्मवाचकत्वम्, 'अकारो वै सर्वा वाक्' इत्यत्र त्वकारस्य सर्वशब्दव्याख्येयत्वमुक्तमिति एतद्वाक्यद्वयपर्यालोचनया सर्ववागभिधेयत्वं ब्रह्मणः प्रतीयते ।

॥ इति तृतीयः परिच्छेदः ॥

## ॥ अथ चतुर्थः परिच्छेदः ॥

# ४. मुख्यवृत्तिप्रभेदाः

मुख्यवृत्तिस्तु त्रेधा भवति। योगो रूढिर्योगरूढिश्चेति।

मुख्यवृत्तिरेव शास्त्रेष्वभिधेति व्यवह्रियते। अत एव तर्कताण्डवकाराः अभिधा, लक्षणा, गौणी चेति वृत्तिं विभज्य अभिधाया मुख्यवृत्तित्वमितरयोस्त्वमुख्यवृत्तित्वमूचुः ।

परममुख्यवृत्तिविषये तु तर्कताण्डवकाराः गम्भीरं मौनं प्रदर्शयन्ति। तत्तु तर्कशास्त्रगताप्रामाणिकप्रमेयखण्डनार्थं प्रवृत्तेऽस्मिन् ग्रन्थे परममुख्यवृत्तिनिरूपणमप्रस्तुतमित्यभिप्रायात्। नैयायिकैरितरैर्वा परममुख्यवृत्तेरनङ्गीकारेण तन्निरूपणस्य प्रतिपादनस्य वाऽनवसरग्रस्तत्वात्। तात्पर्यचन्द्रिकायां तन्निरूपणीयमिति तत्र निरूपितत्वाच्च ।

### ४.१. अभिधा -

अभिधत्ते इत्यभिधा। अभिपूर्वकात् धाञ् धातोः भावे अङि निष्पन्नोऽयमभिधाशब्दः शब्दनिष्ठेऽर्थबोधजननशक्तिविशेषे वर्तते। धारणपोषणार्थकस्य धाञ्धातोरुपसर्गयोगादर्थभेदः। 'अभिः पूजाभृशार्थेच्छासौम्याभिमुख्यसारूप्यवचनाहारस्वाध्यायेषु' इति गणरत्नोक्ताभिद्योत्यार्थेषु वचनमप्यभिद्योत्यत्वेनोक्तम्। 'अभिधा' अभिधानमित्यादावभेर्वचनार्थद्योतकत्वम्। अत अभिधाशब्दः शब्दार्थयोः सम्बन्धविशेषे वर्तते।

अभिधा च सङ्केतितार्थस्य बोधिका शब्दनिष्ठा शक्तिरित्यालङ्का-

रिकाः । वाच्यार्थोऽभिधया बोध्यो इत्याद्युक्त्वा 'तत्र सङ्केतितार्थस्य बोधनादग्रिमाभिधा' इति साहित्यदर्पणे । भाट्टास्तु प्रवृत्तिजनने विधिव्यापारीभूता विधिसमवेता भावनापरनाम्नी अतिरिक्तपदार्थविशेषोऽभिधा । तस्या एव ज्ञानं प्रवर्तकमित्यादि वदन्ति । तामेतामभिधारूपभावनां प्राभाकरा न मन्यन्ते । एवं हि तस्या निरासस्तैः कृतः - अभिधापरपर्यायभावनाज्ञानं न प्रवर्तकं, तस्मिन् सत्यप्यप्रवृत्तेः, असत्यपि तस्मिन् प्रवृत्तेश्च । किन्तु कार्यज्ञानमेव प्रवर्तकमिति ।

शक्तिः सङ्केतोऽभिधा चेत्यादयः शब्दाः पर्यायाः इति नैयायिकाः । किन्तु व्यासतीर्थपूज्यचरणाः 'तत्र शक्त्या प्रतिपादकत्वमभिधा, न तु मण्युक्तरीत्या शक्तिरेव' इति वदन्तः शक्तेरभिधात्वं निराकुर्वन्ति । तेषामयमाशयः- घटशब्दस्य कम्बुग्रीवादिमत्यभिधा वर्तते । अत एव घटशब्दः कम्बुग्रीवादिमन्तमभिधत्त इति व्यवहारः । एवं गङ्गाशब्दः प्रवाहमभिधत्त इत्यपि । यदि तु शक्तिरेवाभिधा तदा 'गङ्गायां घोषः' इत्यत्र गङ्गाशब्दस्य तीरे शक्तिसद्भावेन गङ्गाशब्दः तीरमभिधत्त इत्यपि व्यवहारः प्रसज्येत[1] । शक्तिर्हि सामर्थ्यम् । शब्दे शक्तिर्नाम ज्ञानजननसामर्थ्यमेव । 'गङ्गायां घोषः' इत्यत्र तीरबोधजननसामर्थ्यस्य सत्त्वेन यदि शक्तिरेवाभिधा तदा गङ्गाशब्दाभिधायास्तीरे सत्त्वेन तत्र गङ्गाशब्दस्तीरमभिधत्त इति व्यवहारापत्तिरवारणीया स्यात् ।

इदन्तु बोध्यम् - ज्ञानजननसामर्थ्यमेव शक्तिरिति स्वीकृत्यायं दोष उद्घाटितः । यदि तु शक्तिर्नाम न तावदेव, लक्षणोच्छेदप्रसङ्गात् । किन्तु 'तदभिधत्ते' इति व्यवहारनियामकः कश्चन लक्षणातिरिक्त एव

१. त.तां., पृ.सं. १११

शब्दार्थसम्बन्ध इत्युच्यते, तदा गङ्गायां घोष इत्यत्र तीरलाक्षणिकस्य गङ्गाशब्दस्य तीरे शक्तेरभावेन यद्यपि नायं दोषप्रसङ्गः। तथाऽप्येवं हि शक्तेर्निर्वचनमसाधु भवति। अन्योन्याश्रयप्रसङ्गात्। तथा हि- शक्य-सम्बन्धो लक्षणा इति तत्सिद्धान्तः। शक्तिविषयत्वमेव शक्यत्वम्। तथा च लक्षणायाः शक्तिघटितत्वेन शक्तिज्ञानं विना न लक्षणाज्ञान-सम्भवः। शक्तेश्च यदि लक्षणाव्यतिरिक्तशब्दार्थसम्बन्धस्वरूपत्वं तदा तद्घटकीभूतलक्षणाज्ञानस्यापेक्षितत्वात् अन्योन्याश्रयः स्फुट एव। अतः ज्ञानजननसामर्थ्यमेव शक्तिरिति पर्यवसितम्। इत्थञ्च सति शक्तिरेवा-भिधेति वादस्य पूर्वोक्तदोषग्रस्तत्वात् शक्त्या प्रतिपादकत्वमेवाभिधेति वक्तव्यम्। इदानीं न पूर्वोक्तदोषप्रसङ्गः। 'गङ्गायां घोषः' इत्यत्र हि गङ्गाशब्दः तीरं न केवलं शक्त्या प्रतिपादयति। तथा सति 'गङ्गायां मत्स्यः' इत्यत्रापि शक्त्या तीरबोधकत्वप्रसङ्गात्। किन्तु शक्यसम्बन्धेन (लक्षणया) तीरप्रतिपादकत्वं गङ्गाशब्दस्य। तया च शक्त्या प्रति-पादकत्वरूपाभिधायास्तीरेऽभावेन प्रवाहे तु सत्त्वेन 'गङ्गाशब्दस्तीरं नाभिधत्ते, प्रवाहमभिधत्ते' इति व्यवहारनिर्वाहः। तथा च शक्त्या प्रतिपादकत्वमभिधा।

## ४.२. अभिधाप्रभेदाः-

अभिधायास्त्रैविध्यमङ्गीकृतं द्वैतसिद्धान्ते। रूढिर्योगो योगरूढि-श्चेति[२]।

---

२. अभिधापि त्रेधा। रूढिर्योगो योगरूढिश्चेति। (त.तां., पृ.सं. १२२)
मुख्यवृत्तिरपि त्रेधा भवति। योगो रूढिर्योगरूढिश्चेति।
(न्या.सु. पृ.सं. १८७९)

**रूढिः**-तत्राखण्डशक्त्या प्रतिपादकत्वं रूढिः । नत्वखण्डशक्तिरेव सा । निराकृतत्वात् ।

घटपटादिशब्दा रूढाः । प्रकृतिप्रत्ययार्थविवेचनं विनैवाखण्डशक्त्या घटाद्यर्थप्रतिपादनात् । ननु 'घट चेष्टायाम्' 'पट गतौ' इति भ्वादि-पठितधात्वोरेवौणादिकाणप्रत्यये निष्पन्नयोर्घटपटशब्दयोर्यौगिकत्वात्, रूढत्वेनाभिमतस्य सर्वस्यापि शब्दस्य यत्किञ्चिद्धातुमूलत्वेन व्याख्यातुं शक्यत्वाच्च नास्त्येव रूढिरिति चेत्- सत्यम्, घटादिशब्दा औणादिक-प्रत्ययान्ता इत्यत्र नास्ति विवादः । अस्ति च 'न ह्यधातुमूलः कश्चन शब्दोऽस्ति' इति प्रवादः । परन्तु न तावता ते यौगिकाः । अर्थानुग-मादर्शनात् । पाचकादिशब्देषु व्याकरणस्य शक्तिग्राहकत्वेऽपि घटपटादि-शब्देषु तस्य शब्दसाधुत्वमात्रपरत्वमङ्गीक्रियते । धातुप्रत्ययाद्यर्थानु-गमादर्शनमेवात्र बीजम्[३] । अतो रूढा एव ते घटादिशब्दाः ।

अस्तु वा घटपटादिशब्दानां योगः । 'घट चेष्टायाम्' इत्यादौ घट धातोश्चेष्टायां योगासम्भवेन रूढिरेवाङ्गीकार्या । एवञ्चान्ततः प्रकृतिप्रत्यययोः स्वार्थे रूढिरेवाश्रयणीयेति तेषामेव रूढ्युदाहरणत्वान्न दोषः । 'अ इति ब्रह्म' इत्यादिश्रुत्युक्तैकाक्षरशब्देषु तु न कथङ्कारमपि योगस्यावकाशः । अत एव यदुच्यते नैयायिकादिभिः समुदायशक्ती रूढिरिति तन्न श्रद्धातव्यम् । एकाक्षरपदेषु एकाक्षरप्रत्ययादौ च

---

३. अर्थानुगमादर्शनेन व्याकरणस्य साधुत्वमात्रपरत्वात् । (त.तां, पृ.सं. ११२) नास्ति रूढ इति शाकटायनः । तदसत् । घटपटादिशब्दानां बहुलमुपलम्भात् । तेऽप्युणादिप्रत्ययान्ता यौगिका एवेति चेन्न । अर्थानुगमादर्शनात् । (न्या.सु., पृ.सं. १८८१)

समुदायाभावात्। मण्डं पिबतीति योगविवक्षया प्रयुक्तेऽपि मण्डपशब्दे गृहविशेषविषयसमुदायशक्तेः सत्त्वेन रूढिव्यवहारापातश्च। तथा च न समुदायशक्ती रूढिः। किन्तु अखण्डशक्त्या प्रतिपादकत्वमेव। 'अखण्डा वृत्ती रूढिः, अवयववृत्तिर्योगः' इति प्रमाणलक्षणटीकाया अप्ययमेवार्थो विवक्षितः।

## ४.३. न्यायसुधोक्तरूढिलक्षणस्याभिप्रायः -

श्रीमन्न्यायसुधायां तु रूढिलक्षणमेवमुक्तम्- 'यत्रार्थे यस्य शब्दस्य प्रयोगमात्रबाहुल्यं तस्य तत्र वृत्ती रूढिरित्यभिधीयते। मात्रेत्यवयवार्थ-सादृश्यादिसापेक्षताव्युदासार्थम्। तेन परममुख्यवृत्तेर्योगरूढेः रूढोपचार-लक्षणाभ्यश्च व्यवच्छेदः' इति[४]। 'प्रयोगमात्रबाहुल्यं रूढिरित्यभिधी-यते'[५] इत्यनुव्याख्यानानुसारेणेदमुक्तम्। अस्याभिप्रायस्तु- यस्य यत्र अवयवार्थ-मुख्यार्थसादृश्य-मुख्यार्थसम्बन्धानपेक्षः बहुलप्रयोगस्तस्य तत्र रूढिः। तत्रावयवार्थानपेक्षत्वोक्त्या योगरूढिभ्यां व्यवच्छेदः। मुख्यार्थ-सम्बन्धानपेक्षत्वोक्त्या लक्षणाव्यवच्छेदः। मुख्यार्थसादृश्यानपेक्षत्वोक्त्या तु गौण्या व्यवच्छेदः इति।

नन्वखण्डशक्त्या प्रतिपादकत्वं रूढिरित्युपपादितम्। न्यायसुधा-कारास्तु नात्र संवदन्ते। प्रत्युत 'यस्य यत्रावयवार्थाद्यनपेक्षबहुल-प्रयोगस्तस्य तत्र रूढिरिति वदन्तः शक्तेरभावमभिप्रयन्ति ते। प्रयोग एव रूढिरिति हि तद्वाक्यस्याभिप्रायः। तेन हि अखण्डशक्तेरभावोऽ-भिप्रेत इति चेन्न। न्यायसुधायां हि यत्रार्थे यस्य शब्दस्य प्रयोगमात्रबाहुल्यं

४. न्या.सु., पृ.सं. १८८१ ५. अ.व्या. श्लो ३३९

तत्र तस्य वृत्ती रूढिरित्युक्तम्। तत्र प्रयोगमात्रबाहुल्यमित्यस्य प्रयोगबाहुल्यज्ञाप्याखण्डवृत्तिरित्यर्थः। ज्ञाप्यज्ञापकयोरभेदोपचारात्[६]। तेन प्रयोगबाहुल्येन रूढिसाधनपरेण 'बहुलातिप्रयोगतः। रूढमित्येव साध्यं स्यात्'[७] इत्यनुव्याख्यानेन न विरोधः। प्रयोगबाहुल्यस्यैव रूढित्वे तु साध्यहेत्वोरैक्येन दौर्घट्यं स्फुटमेव। तथा चानुव्याख्यानाविरोधाय न्यायसुधागतप्रयोगबाहुल्यशब्दस्य तज्ज्ञाप्याखण्डवृत्तित्वार्थकत्वस्वीकारस्यावश्यकत्वात् अखण्डशक्त्या प्रतिपादकत्वमेव (अखण्डशक्तिवृत्तिरेव) रूढिरित्युक्तं भवतीति न तर्कताण्डवविरोधः।

यद्वा अखण्डशक्तिर्हि प्रयोगबाहुल्येनानुमीयते। प्रयोगमात्रबाहुल्यमखण्डशक्तौ प्रमाणमिति यावत्। अखण्डशक्तौ प्रमाणमपि प्रयोगमात्रबाहुल्यम् अर्थात् अवयवार्थः- मुख्यार्थसम्बन्धमुख्यार्थसादृश्यानपेक्षः बहुलप्रयोगः, अतिव्याप्त्यादिशून्यत्वात् अखण्डशक्तेर्लक्षणमपि भवितुमर्हतीत्याशयेन प्रयोगमात्रबाहुल्यस्य रूढित्वमुक्तम्। उक्तः बहुलप्रयोगः रूढौ प्रमाणमिति तु ग्रन्थकाराणामभिमतमेव। तथा च बहुलप्रयोगेणानुमेयाऽखण्डशक्तिः न्यायसुधाकाराणामभिमतैवेति न विरोधः।

किञ्च 'शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते' इति घटादिशब्देष्वपि शक्त्युक्तेः, 'बहुलातिप्रयोगतः रूढमित्येव साध्यं स्यात्' इत्येवं बहुलप्रयोगेण रूढिसाधनात्, 'प्रयोगयुक्तसादृश्यम्' इत्यनुव्याख्यानस्थप्रयोग-

---

६. परि., पृ.सं. १८८

७. तद्वाचकत्वं शब्दानां बहुलातिप्रयोगतः।
रूढमित्येव साध्यं स्यात् रूढिर्हि द्विविधा यथा॥ अ.व्या. (श्लो.२४०)

शब्दस्य 'सामर्थ्यमर्थः' इति सुधायामेव व्याख्याततत्वाच्चोक्त एवाभिप्रायः न्यायसुधाकाराणाम् । तथा च न तर्कताण्डवन्यायसुधयोर्विरोधः ।

## ४.४. योगः -

अवयवशक्तिसापेक्षा वृत्तिर्योगः। वृत्तिश्चार्थप्रतिपादकत्वमित्युक्तम् । तथा चावयवशक्तिलभ्यमर्थमपेक्ष्य अर्थप्रतिपादकत्वं योगः । कुम्भकार-पाचकप्रभृतयः कृदन्ताः, औपगवपौर्वशालमुखास्तद्धितान्ताः राज-पुरुषार्धपिप्पल्यादयः समासशब्दाश्च यौगिकाः । कुम्भं करोतीति कुम्भपदे कर्मण्युपपदे 'डु कृञ् करणे' इत्यस्मात् 'कर्मण्यण्' इति[८] सूत्रेणाण्प्रत्यये 'अचो ञ्णिति'[९] इति वृद्धौ सुपि सति कुम्भकार इति कृदन्तः । उपगो-रपत्यमित्यर्थे 'तस्यापत्यम्' इति[१०] सूत्रेण उपगुशब्दादपत्यार्थाण्प्रत्यये तद्धितेष्वचामादेः' इत्यादिवृद्धौ[११] 'ओर्गुणः' इति गुणे[१२] औपगवेति तद्धितान्तः। राज्ञः पुरुष इति विग्रहे 'षष्ठी' इति[१३] सूत्रेण समासे 'सुपो धातुप्रातिपादिकयोः'[१४] इति विभक्तिलोपे राजपुरुष इति समासः । अत्र सर्वत्रावयवशक्तिमपेक्ष्यार्थबोधादेषां यौगिकत्वम् ।

ननु यथा घटपटादिषु शब्देषु व्याकरणं साधुत्वमात्रपरमित्युक्तं तथे-हापि किं न स्यादिति चेन्न । अर्थानुगमदर्शनेन व्याकरणस्य शक्ति-बोधकत्वावगमात् ।

यद्यप्यत्र कुम्भेति प्रातिपदिकं, करोति धातुः, अणिति प्रत्ययश्चेति

---

८. पा.सू. ३.२.१. ९. पा.सू. ७.२.११५.
१०. पा.सू. ४.१.९२. ११. पा.सू. ७.२.११७.
१२. पा.सू. ६.४.१४६ १३. पा.सू. २.२.८ १४. पा.सू. २.४.७२

त्रयोऽपि स्वार्थेऽन्यानपेक्षाः रूढाः एव । तथाऽपि समुदायः कुम्भ-कर्त्रादिरूपे विशिष्टेऽर्थेऽवयवशक्तिसापेक्षः । न त्वश्वकर्णादिशब्दो वृक्षविशेषे इव तन्निरपेक्ष इति भवति यौगिकः । एवमौपगवादिशब्दा अपि विशिष्टार्थे यौगिकाः ।

नन्ववयवशक्तिसापेक्षमर्थप्रतिप्रादकत्वं योग इत्युक्तम् । तर्हि वाक्येऽपि योगवृत्तिप्रसङ्गः । वाक्यस्यापि स्वार्थबोधने स्वावयवभूतपदशक्तिसापेक्ष-त्वात् इति चेन्न । योगलक्षणे अवयवपदेन पदावयवस्य विवक्षितत्वात् । न चैवं राजपुरुषेत्यादौ यौगिकत्वं न स्यात्, पदसमुदायरूपत्वात्तस्येति वाच्यम् । 'एकपद्यमैकस्वार्थमैकविभक्तिकत्वं समासप्रयोजनम्' इत्युक्त्या[१५] समासस्याप्येकपदत्वेन तदवयवस्यापि पदावयवत्वेनादोषात् । यद्वा वृत्तिशब्देनैव वाक्येऽतिव्याप्तिपरिहारः । तत्र वृत्तेरभावात्[१६] ।

**४.५. अत्र न्यायसुधाकाराणामाशयः -**

न्यायसुधायान्तु 'प्रवृत्तिनिमित्तापेक्षा वृत्तिर्योगः । यथा कुम्भकार, औपगव, राजपुरुष इति' इत्युक्तम्[१७] । प्रवृत्तिनिमित्तपदेनावयवार्थ एव सुधाकाराभिमतः । न तु लोकप्रसिद्धं प्रवृत्तिनिमित्तं घटत्वादिकम् । तथा सति रूढेरपि घटत्वादिप्रवृत्तिनिमित्तसापेक्षत्वेन घटपटादिपदानामपि प्रवृत्तिनिमित्तसापेक्षवृत्तिकत्वेनातिव्याप्तिः स्यात् । वृत्तिश्चार्थप्रतिपादक-त्वमित्युक्तम् । एवं च 'प्रवृत्तिनिमित्तसापेक्षा वृत्तिर्योगः'इति वदतां श्रीमज्जयतीर्थवर्याणामवयवशक्तिलभ्यमवयवार्थमपेक्ष्यार्थप्रतिपादकत्व-मेव रूढिलक्षणमभिप्रेतम् । 'प्रवृत्तिहेतोर्बाहुल्यं ज्ञेयं परममुख्यता' इत्यनु-

१५. पातञ्जलमहाभाष्ये 'समर्थः पदविधिः' इति सूत्रे ।
१६. या.टि., (न्या.सु.टि.) पृ.सं. १८८०  १७. न्या.सु., पृ.सं. १८७९

व्याख्यानगतप्रवृत्तिहेतुशब्दव्याख्यानावसरे 'निर्वचनलभ्योऽर्थः प्रवृत्ति-हेतुः'[१८] इति सुधायामेव व्याख्यातत्त्वाच्च सुधाकाराणां प्रवृत्तिहेतु-शब्देनावयवार्थो विवक्षित इत्यत्र नास्ति विवादः ॥

**योगरूढिः** - प्रवृत्तिनिमित्तसापेक्षो यत्र बहुलप्रयोगस्तत्र योगरूढिः[१९]। अवयव-शक्तिलभ्यमर्थमपेक्ष्य समुदायशक्त्या प्रतिपादकत्वं योगरूढिरिति यावत्। यथा- पङ्कजपदं योगरूढ्या पद्मप्रतिपादकम्। योगमात्रेण हि पङ्कजनिकर्तारं वदति। रूढिमात्रेण तु केवलं पद्मत्वविशिष्टं बोधयति। न तु पङ्कजनिकर्तारं पद्मत्वविशिष्टम्। अस्ति चैतादृशो बोधः। अतः पङ्कजशब्दस्य पद्मे न केवलं योगः। न वा केवलं रूढिरिति ताभ्या-मतिरिक्ता योगरूढिरङ्गीकृता।

यद्यपि न्यायसुधायां योगो रूढिर्योगरूढिश्चेति क्रमेण वृत्तिविभागः कृतः[२०]। तर्कताण्डवे तु रूढिर्योगोयोगरूढिश्चेति क्रम आदृतः[२१]। तथाऽपि नात्राभिप्रायभेदः। विवक्षाभेदेन क्रमभेदोपपत्तेः। तथा हि- योगस्य रूढ्यपेक्षया रूढेश्च योगरूढ्यपेक्षया दौर्बल्यात् दौर्बल्यक्रमेण योग-रूढि-योगरूढीनां क्रमेण निर्देशो न्यायसुधायां कृतः[२२]। योगाद्रूढेः प्राबल्यात् प्राबल्यक्रमेण तर्कताण्डवे योगो रूढिरिति निर्देशः कृतः। योगरूढेस्तु रूढियोगाभ्यां प्राबल्येऽपि तस्याः रूढियोगसमाहाररूपत्वात् तज्ज्ञानं विना दुर्ज्ञेयत्वादन्ते निर्देश इति ज्ञेयम्।

**॥ इति चतुर्थः परिच्छेदः ॥**

---

१८. न्या.सु., पृ.सं. १८७०　　१९. न्या.सु., पृ.सं. १८८१
२०. मुख्यवृत्तिरपि त्रेधा भवति। योगो रूढिर्योगरूढिश्चेति (न्या.सु. १८७९ पृ.)
२१. अभिधापि त्रेधा। रूढिर्योगो योगरूढिश्चेति। (त.तां. १२२पृ.)
२२. शे.वा.चन्द्रिका (१८७१ पृ.)

## ॥ अथ पञ्चमः परिच्छेदः ॥

## ५. योगरूढिसमर्थनम्

अभिधाद्वैविध्यमङ्गीकृत्य तत्त्रैविध्यविषये विवदमानाः योगरूढ्य-पलापवादिन एवमाहुः - योगो रूढिश्चेत्यभिधायां द्वैविध्यमेव । न तु योगरूढिरिति तृतीया वृत्ति-रस्ति । पङ्कजपङ्केरुहादिशब्दा अपि तामरसे पद्मशब्दवद्रूढा एव । कोशेषु पद्मपर्यायत्वेन तेषां पाठात् । तथाह्यमरकोशे पाठः- 'वा पुंसि पद्मम्' इत्यारभ्य 'पङ्केरुहं तामरसं सारसं सरसीरुहम्'[१] इति । योगस्य च भेककुमुदादावतिप्रसङ्गेनानतिप्रसङ्गायावश्याङ्गी-करणीयया रूढ्यैवोपपत्त्या योगस्यापि तत्र प्रवेशस्य व्यर्थत्वाच्च ।

नन्वेवं पङ्कजशब्दे योगवृत्त्यपलापे पाणिनिस्मृतिविरोधः । तत्र हि 'सप्तम्यां जनेर्डः'[२] इति सूत्रेण सप्तम्यन्ते उपपदे 'जनी-प्रादुर्भावे' इत्यस्माद्धातोः कर्तरि डप्रत्ययो विहितः । तदनुसारेण 'पङ्के जायत इति पङ्कजम्' इति निष्पत्तिः । यदि पङ्कजशब्दे योग एव नास्ति तदैतत्-पाणिन्यनुशासनविरोध इति चेन्न । 'सप्तम्यां जनेर्डः' इत्यनुशासनं 'गमेर्डोः'[३] इत्यादिवत् शब्दसाधुत्वमात्रपरम् । गमेर्धातोः 'डो' प्रत्ययो भवतीत्यौणादिकगोशब्दव्युत्पादनं हि शब्दसाधुत्वमात्रपरम् । न हि गोशब्दो अवयवार्थं निमित्तीकृत्य गवि प्रवर्तते । न च अवयवार्थं निमित्तीकृत्यैव गवि गोशब्दप्रवृत्तिः, गमनकर्तृत्वस्य गवि सत्त्वादिति वाच्यम् । गमनकर्तृत्वस्य गवि सत्त्वेऽपि गोशब्देन तस्याप्रतीतेः । अन्यथा महिष्यादावपि, गोशब्दप्रयोगापत्तिः । इत्थञ्च 'गमेर्डोः' इत्यादीनां यथा

---

१. अ.को., वारिवर्गे श्लो.३०३ २. पा.सू., ३-२-९८

३. पा.सू., उणादिसूत्रम् - २२५

शब्दसाधुत्वमात्रपरत्वं तथा 'सप्तम्यां जनेर्डः' इत्यादीनामपि तथात्वमेवातः पङ्कजशब्दो रूढ एव। न योगरूढ इति।

अत्रोच्यते- विषमोऽयमुपन्यासः। गमेर्धातोरौणादिकडोप्रत्यये निष्पन्नोऽपि गोशब्दः गमनकर्तृत्वं न प्रत्याययति। किन्तु गोत्वमात्रम्। प्रतीत्यनुरोधेन हि वृत्तिकल्पनम्[४]।

अतः गोत्वमात्रप्रत्यायकस्य गोशब्दस्य केवलरूढत्वेऽपि पङ्कजादिशब्दानां न तथात्वं युक्तम्। पङ्कजशब्दात् औपगवादिशब्दैरिवावयवार्थस्य पङ्कजनिकर्तृत्वस्यापि प्रतीतेः। न हि पद्मशब्देन पद्मत्वविशिष्टमात्रबोध इव पङ्कजशब्देन तन्मात्रबोधः। पङ्कजनिकर्तृत्वविशिष्टस्य पद्मत्वेन रूपेण बोधस्यानुभवसिद्धत्वात्। इत्थञ्च पङ्कजशब्दस्य केवलरूढत्वे पङ्कजनिकर्तृत्वबोधानुपपत्तेर्योगरूढत्वमेवोपेयम्।

यत्तूक्तं कोशपाठान्यथानुपपत्त्या पङ्कजशब्दस्य रूढत्वमिति तत्तुच्छम्। न हि कोशेषु रूढशब्दमात्रपाठ इति नियमोऽस्ति। 'वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः'[५] इति यौगिकस्यापि शचीपतिशब्दस्य रूढेन्द्रशब्दपर्यायत्वेन पाठदर्शनात्। तथा च पङ्कजशब्दस्य योगरूढत्वाङ्गीकारे नोक्तानुपपत्तिः।

### ५.१. पङ्कजपदं पद्मे यौगिकमेवेति प्राभाकरमतम् -

प्राभाकरास्तु पङ्कजपदं पद्मे यौगिकमेवेत्याहुः। अयं तेषां वादः - पङ्कजपदे रूढिः किमर्थमङ्गीकार्या? किं पद्मत्वभानार्थमुत कुमुदाद्यभानार्थम्? आद्येऽपि किं पद्मत्वस्मृत्यर्थमुतानुभवार्थमित्यभिप्रायः? न

४. त.तां.न्या.दीपः, पृ.सं. ११९ ५. अ.को., स्वर्गवर्गः, श्लो.५१

तावदाद्यः। पद्मत्वस्मृत्यर्थं हि पङ्कजपदस्य तत्र रूढिर्नापेक्षिता। पद्मत्वस्य पङ्कजपदाशक्यत्वेऽपि पद्मत्वाधिकरण एव नियतप्रयोगवत्त्वरूपसम्बन्ध-युक्तेन अशक्तेनैव पदेनोद्बुद्धसंस्कारादेव पद्मत्वस्मृत्युपपत्तेः। नापि तदनुभूत्यर्थमिति द्वितीयः। रूढ्यभावेऽपि पङ्कजपदेन पद्मोपस्थिति-सम्भवात्। तथाहि- 'व्यक्तिवचनानां सन्निहितविशेषपरत्वम्' इत्यस्ति हि न्यायः। न्यायस्यायमर्थः- किञ्चिद्व्यक्तितात्पर्यकाणां शब्दानां बुद्धिस्थव्यक्तिविशेषपरत्वमिति। यथा 'आग्नेय्याऽऽग्नीध्रमुपतिष्ठत इत्यत्राग्नेयीशब्देन ज्योतिष्टोमप्रकरणसन्निहिता अग्निप्रकाशिका 'अग्न आयाहि वीतये' इत्यादिकैव ऋगुपस्थाप्यत इत्युक्तं मीमांसातृतीयाध्याय-द्वितीयपादीयाष्टमाधिकरणे; यथा वा 'घटेन जलमाहर' इत्युक्ते घटशब्दस्य सन्निहितघटपरत्वं तथा प्रकृतेऽपि। किञ्चिद्व्यक्तितात्पर्यक-तया प्रयुक्तमिदं पङ्कजपदम्। पङ्कज-शब्देनोक्तरीत्या स्मृतं च पद्मं बुद्धौ वर्तते। इत्थञ्च पङ्कजपदावयवैः प्रातिपदिकधातुप्रत्ययैः पङ्क-जनी-ड-इत्येवंरूपैर्बोध्यमानं पङ्कजनिकर्तृत्वं स्मर्यमाणतया बुद्धिस्थे पद्म एव बोध्यते- पङ्कजनिकर्तृ पद्ममिति। तथा चेत्थं योगमात्रेण पद्मभानोपपत्तौ कस्य देवस्य प्रीत्यै रूढिरङ्गीकार्या?

नन्वेवं सति गोशब्दस्यापि गवि रूढिर्न स्यात् गोत्वाधिकरण एव नियतप्रयोगवत्त्वरूपसम्बन्धयुक्तेन गोशब्देनैवोक्तरीत्या गोपिण्ड-स्मृतिसम्भवादित्येवं रूढिमात्रोच्छेदप्रसङ्ग इति चेन्न। तथात्वे गोशब्द-वैयर्थ्यात्। यदि गोशब्देन गोत्वं नोपस्थाप्यते तदा अन्यथोपस्थिते गोपिण्डे अवयवार्थसमर्पणरूपेणापि सार्थक्यासम्भवात् गोपदं व्यर्थं स्यादतस्तस्य रूढत्वमावश्यकम्। न च पङ्कजादियोगरूढस्थलेऽप्येवं

शङ्क्यम्। तत्रान्यथोपस्थिते पद्मेऽवयवार्थभूतपङ्कजनिकर्तृत्वस्योपस्थित्यर्थं पङ्कजपदमिति सार्थक्यात्।

ननु पद्मत्वाधिकरणे एव नियतप्रयोगवत्त्वरूपसम्बन्धयुक्तेनाशक्तेनैव पदेन संस्कारोद्बोधद्वारा पद्मत्वस्मृतिरित्युक्तम्। एवं तर्हि प्रयोगविषये पद्मत्ववत् तद्व्यापकस्य कुसुमत्वस्य, तद्व्याप्यस्य पुण्डरीकत्वस्य च सत्त्वात् तयोरपि स्मृतिः स्यादिति चेन्न। तयोः प्रयोगेण सह सम-नियमाभावात्। यत्र यत्र पद्मत्वं तत्र सर्वत्रापि पङ्कजपदप्रयोगः, यत्र तु पङ्कजपदप्रयोगः तत्र सर्वत्रापि पद्मत्वमिति प्रयोगेण सह पद्मत्वस्य समनियमभावेऽपि यत्र यत्र कुसुमत्वं तत्र सर्वत्रापि पङ्कजपदप्रयोग इति नियमाभावात्। एवमेव यत्र यत्र पङ्कजपदप्रयोगस्तत्र सर्वत्रापि पुण्डरीकत्वमित्यपि नियमाभावात् पङ्कजपदप्रयोगविषये न तयोः स्मृतिसम्भवः।

ननु तर्हि पङ्कजपदे रूढिः न पद्मत्वभानार्थं, त्वदुक्तरीत्या तस्यान्यथैव भानोपपत्तेः; तथाऽपि कुमुदाद्यभानार्थं साऽपेक्षितेति द्वितीयः पक्ष आश्रीयत इति चेत्- तदपि न। पङ्कजं कुमुदमानयेत्यादौ पङ्कजशब्देन कुमुदादेरपि भानात्। किञ्च कुमुदाद्यप्रतीत्यर्थं तत्प्रत्यायकयोगाभाव एव कल्प्यः, न तु पद्मत्वे रूढिः। पद्मत्वे रूढिः कुमुदाद्यभानं प्रत्यप्रयोजकमिति यावत्। तस्मात् पङ्कजपदं पद्मे यौगिकमेव। न तु तत्र रूढेर्गन्धोऽप्यस्तीति प्राभाकराः।

## ५.२. प्राभाकरवादनिराकरणम् -

अत्रोच्यते - पङ्कजपदस्य पद्मत्वविशिष्टे शक्तिरवश्यमङ्गीकार्या। यदि तस्य पद्मत्वविशिष्टे शक्तिर्नास्ति तदा किं पङ्कजपदशक्यमिति प्रश्ने 'पद्मम्'

इत्यभियुक्तानां प्रतिवचनम्, कोशकाराणां पद्मपर्यायतया पाठश्च न स्याताम्। पङ्कजं पद्ममिति कदाचित् सहप्रयोगश्च स्यात्[६]।

किं पङ्कजपदशक्यमिति पृष्टे 'पद्मम्' इत्यभियुक्तास्तावत् प्रतिवदन्ति। न हि पङ्कजपदस्य पद्मज्ञापकत्वमात्रेणैवं प्रतिवचनं युक्तम्। शक्तेरेव पृष्टत्वात्।

ननु यदुक्तं कोशपाठेन शक्तिनिर्णय इति तदयुक्तम्। न हि कोशपाठो शक्तिनिर्णायकः। भ्रमराशक्तस्यापि द्विरेफशब्दस्य 'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः'[७] इत्यादिषु कोशेषु भ्रमरपर्यायतया पाठादिति चेन्न। अत्र ह्येवं प्रश्नकर्तुः द्विरेफशब्दस्य रेफद्वयघटितभ्रमरशब्दरूपमुख्यार्थसम्बन्धात् भ्रमरे लाक्षणिकत्वमभिप्रेतम्। सुदृढनैयायिकप्रक्रियावासनाऽत्र बीजम्। न ह्यस्माभिस्तत्र लाक्षिणिकत्वमभ्युपेयते। नापि तद्युक्तम्। द्विरेफशब्देन मुख्यार्थानुपपत्त्यपुरस्कारेणैव भ्रमरप्रतीतेः। न हि द्विरेफमानयेत्यादिना भ्रमरप्रतीतौ मुख्यार्थस्य द्विरेफपदस्य रेफद्वयस्य वाऽऽनयनान्वयानुपपत्तिप्रतिसन्धानमस्ति। मुख्यार्थानुपपत्त्यादिप्रतिसन्धानं विनैव यत्र अर्थबोधः न हि तत्र लक्षणाङ्गीकारो न्याय्यः। तस्मात् द्विरेफपदं भ्रमरे रूढमेव। न च क्लृप्तलक्षणयैवोपपत्तौ समुदायशक्तिकल्पनं गुर्विति वाच्यम्। योगस्य रेफद्वययुक्तरामचन्द्ररुद्रहरिश्चन्द्रादिशब्देष्वतिप्रसक्तत्वेन लाक्षणिकत्ववादिमतेऽपि भ्रमरशब्दे रूढेरवश्यमङ्गीकर्तव्यत्वेन भ्रमरे एव द्विरेफपदरूढेरङ्गीकारस्यौचित्यात्। तथा च द्विरेफशब्दस्य भ्रमरे रूढत्वेनैव कोशे तत्पर्यायत्वेन

६. त.तां., पृ.सं. १२२

७. अ.को., सिंहादिवर्गे ५५५तमः श्लोकः

पाठः । प्रकृते पङ्कजपदस्य पद्मपर्यायतया कोशपाठोऽपि तस्य तत्र रूढिमवगमयति ।

ननु पङ्कजपद्मपदयोः सह प्रयोगोऽपि पङ्कजपदस्य पद्मे शक्तिं निगमयतीत्युक्तम्। तदयुक्तम्। अन्यथासिद्धत्वात्। तत्र हि पद्मत्वाधिकरण एव नियतप्रयोगवत्त्वरूपसम्बन्धेनेत्याद्युक्तरीत्योपस्थिते पद्म एव पङ्कजपदावयवार्थान्वयेन 'पङ्कजनिकर्तृ पद्मम्' इति पङ्कजपदेनैव बोधात् पद्मपदाकाङ्क्षा विरहादेव पङ्कजपद्मपदयोः सहप्रयोगाभावः। न तु द्वयोरपि शक्तत्वेन पर्यायताप्रयुक्तः सः । इति चेन्न । अत्र प्रमाणाभावात् । पङ्कजपदनिष्ठया शक्त्योपस्थितं पद्ममादाय पङ्कजपदावयवाः पङ्कजनिकर्तृ पद्ममिति नानुभावयन्ति; किन्तु अशक्तेनैव पङ्कजपदेनोपस्थितं पद्ममादाय पङ्कजनिकर्तृत्वमनुभावयन्तीत्यत्र न हि किञ्चित् प्रमाणमस्ति । एवं च किं पङ्कजपदशक्यमिति प्रश्ने पद्ममित्यभियुक्तानां प्रतिवचनान्यथानुपपत्त्या कोशकाराणां पद्मपर्यायतया पाठान्यथानुपपत्त्या, पङ्कजं पद्ममिति सहप्रयोगाभावान्यथानुपपत्त्या च पङ्कजपदस्य पद्मे शक्तिः (रूढिः) सिद्ध्यति ।

न केवलमेतावता। समुदायव्युत्पत्त्यपेक्षान्यथानुपपत्त्यापि पङ्कजपदस्य पद्मे शक्तिरभ्युपगन्तव्या। तथाहि- यदि पङ्कजशब्दस्य पाचकादिपदवत् केवलयौगिकत्वं तदा पद्मत्वविशिष्टे समुदायव्युत्पत्तेरपेक्षा न स्यात् । अस्ति च सा। अवयवव्युत्पन्नस्यापि पुंसः समुदायाव्युत्पन्नस्य पद्मत्वाप्रतीतेः । अवयवाव्युत्पन्नस्यापि वृद्धव्यवहारादिना समुदायव्युत्पन्नस्य तत्प्रतीतेश्च[८] ।

---

८. त.तां, पृ.सं. १२४

ननु वृद्धव्यवहारो न समुदायशक्तिग्राहकः । किन्तु नियतप्रयोगवत्त्वरूपसम्बन्धग्रहार्थमेव सः उपयुज्यत इति चेन्न । तथा सति गोशब्दादावपि तथेत्यङ्गीकारप्रसङ्गेन रूढिमात्रविलयप्रसङ्गात् । नन्वत्रोक्तं गोशब्दस्य यदि गवि शक्तिर्न स्यात्तदा गोशब्दवैयर्थ्यं स्यादितीति चेत्, सत्यमुक्तम्; दुरुक्तं तत् । अशक्तेन गोशब्देनैवोक्तरीत्या गोपिण्डस्मृतेः सम्भवेन गोशब्दे रूढेरप्यनङ्गीकर्तव्यत्वेन गोशब्दवैयर्थ्यस्यैवास्माभिरापादनात्[१] ।

किञ्च गवि शक्त्यभावे गोशब्दवैयर्थ्यं खल्वापादनीयम् । आपाद्यतां नाम! किमेतेन? अवैयर्थ्याय शक्तिः कल्पनीयेति चेत्तर्हि लाक्षणिकेऽपि तत्प्रसङ्गेन लक्षणोच्छेदप्रसङ्गः । ननु लाक्षणिके गङ्गादिपदे शक्तिर्न कल्प्यते, शक्तिग्राहकस्य वृद्धव्यवहारादेरभावात् इति चेत्तर्हि पङ्कजशब्दे शक्तिग्राहकस्य वृद्धव्यवहारादेर्भावात् पद्मे तस्य शक्तिरस्तु ।

यद्वा, वैयर्थ्याभावोऽप्युपपाद्यते - कृतिराख्यातार्थ इति पक्षे करोतीत्यत्र कृधातोरपि कृत्यर्थकत्वात् आख्यातेनैव कृतेरुपस्थित्या धातोर्वैयर्थ्यं यद्यप्यापादनीयम् । तथाऽपि 'न केवला प्रकृतिः प्रयोक्तव्या; नापि प्रत्ययः' इति नियमानुसारेण प्रत्ययानुग्राहकत्वं धातोरभ्युपगतम् । तद्वत् 'गामानय' इत्यत्रापि गोप्रातिपदिकस्य कर्मत्वोपस्थापकविभक्त्यनुग्रहार्थत्वमङ्गीक्रियते । इत्थञ्च न गोशब्दवैयर्थ्यम् । एवञ्च समुदायव्युत्पत्त्यपेक्षान्यथानुपपत्त्या पङ्कजपदे पद्मविषयिणी रूढिरभ्युपेया ।

किञ्चैवं सति पङ्कजपदे योगो न सिद्ध्येत् । तत्र पूर्वोक्तरीत्या

---

१. त.तां., पृ.सं. १२४

अदृष्टादिना वा पङ्कजनिकर्तर्येव नियतप्रयोगवत्त्वसम्बन्धयुक्तेनावयवशक्तिशून्यपङ्कजपदेनैव वा उद्बुद्धसंस्कारादेव पङ्कजनिकर्तुः स्मृतिः, एवं स्मृते पङ्कजनिकर्तरि समुदायशक्त्या पद्मत्वविशिष्टानुभवः इति वैपरीत्येनापि वक्तुं शक्यत्वात्[१०]।

नन्ववयवमात्रव्युत्पन्नस्य पङ्कजपदेन पङ्कजनिकर्तृत्वप्रतीतेः तत्र योगः सिद्ध्यतीति चेत्तर्हि समुदायमात्रव्युत्पन्नस्य पङ्कजपदात् पद्मत्वप्रतीतेः रूढेरपि सिद्ध्या योगरूढत्वाङ्गीकारावश्यम्भावात्। इत्थञ्च अश्वकर्णादिशब्दवत् व्युत्पत्तिद्वयसापेक्षत्वात् योगरूढोऽयं शब्दः। एतावांस्तु विशेषः। अश्वकर्णशब्दे योगरूढी भिन्नविषये। वृक्षविशेषे रूढिः, अश्वकर्णसदृशकर्णवति पशुविशेषे रूढिरिति। इह तु ते एकविषये इति ॥

एवं विभक्त्यर्थाद्यन्यथानुपपत्त्यापि पङ्कजपदादौ रूढिसिद्धिः। तदित्थम्- पङ्कजमानयेत्युक्ते पद्मकर्मकानयनबोधोऽनुभवसिद्धः। पद्मत्वविशिष्टस्य पङ्कजपदवृत्त्यविषयत्वे नायं बोधस्तत्रोदेतुमर्हति। यतः- प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमित्यस्ति व्युत्पत्तिः। प्रत्ययाः विभक्तिकृत्तद्धिताख्याताः। यस्मात् प्रत्ययो विधीयते सः प्रकृतिः। प्रकृते अमिति प्रत्ययः स्वप्रकृत्यर्थान्वित कर्मत्वं बोधयतीति व्युत्पत्तिः। अम्प्रकृतिश्च पङ्कजपदम्। पङ्कजपदस्यार्थो नाम शक्तिलक्षणान्यतरवृत्त्या तद्बोध्योऽर्थः। यदि पङ्कजपदस्य पद्मत्वविशिष्टे रूढिर्नाङ्गीक्रियते तदा पद्मं प्रकृत्यर्थो न स्यात्। तस्य प्रकृत्यर्थत्वाभावे च तदन्वितकर्मत्वबोधने व्युत्पत्तिविरोधः ॥

१०. किञ्च त्वदुक्तरीतिद्वयेन स्मृतकर्तृत्वाचितपद्मानुभवो रूढ्यैवास्त्विति योगो न सिद्ध्येत्। (त.तां., पृ.सं. १२७)

ननु वृद्धव्यवहारो न समुदायशक्तिग्राहकः। किन्तु नियतप्रयोगवत्त्वरूपसम्बन्धग्रहार्थमेव सः उपयुज्यत इति चेन्न। तथा सति गोशब्दादावपि तथेत्यङ्गीकारप्रसङ्गेन रूढिमात्रविलयप्रसङ्गात्। नन्वत्रोक्तं गोशब्दस्य यदि गवि शक्तिर्न स्यात्तदा गोशब्दवैयर्थ्यं स्यादितीति चेत्, सत्यमुक्तम्; दुरुक्तं तत्। अशक्तेन गोशब्देनैवोक्तरीत्या गोपिण्डस्मृतेः सम्भवेन गोशब्दे रूढेरप्यनङ्गीकर्तव्यत्वेन गोशब्दवैयर्थ्यस्यैवास्माभिरापादनात्[१]।

किञ्च गवि शक्त्यभावे गोशब्दवैयर्थ्यं खल्वापादनीयम्। आपाद्यतां नाम! किमेतेन? अवैयर्थ्याय शक्तिः कल्पनीयेति चेत्तर्हि लाक्षणिकेऽपि तत्प्रसङ्गेन लक्षणोच्छेदप्रसङ्गः। ननु लाक्षणिके गङ्गादिपदे शक्तिर्न कल्प्यते, शक्तिग्राहकस्य वृद्धव्यवहारादेरभावात् इति चेत्तर्हि पङ्कजशब्दे शक्तिग्राहकस्य वृद्धव्यवहारादेर्भावात् पद्मे तस्य शक्तिरस्तु।

यद्वा, वैयर्थ्याभावोऽप्युपपाद्यते - कृतिराख्यातार्थ इति पक्षे करोतीत्यत्र कृधातोरपि कृत्त्यर्थकत्वात् आख्यातेनैव कृतेरुपस्थित्या धातोर्वैयर्थ्यं यद्यप्यापादनीयम्। तथाऽपि 'न केवला प्रकृतिः प्रयोक्तव्या; नापि प्रत्ययः' इति नियमानुसारेण प्रत्ययानुग्राहकत्वं धातोरभ्युपगतम्। तद्वत् 'गामानय' इत्यत्रापि गोप्रातिपदिकस्य कर्मत्वोपस्थापकविभक्त्यनुग्रहार्थत्वमङ्गीक्रियते। इत्थञ्च न गोशब्दवैयर्थ्यम्। एवञ्च समुदायव्युत्पत्त्यपेक्षान्यथानुपपत्त्या पङ्कजपदे पद्मविषयिणी रूढिरभ्युपेया।

किञ्चैवं सति पङ्कजपदे योगो न सिद्ध्येत्। तत्र पूर्वोक्तरीत्या

---

१. त.तां., पृ.सं. १२४

अदृष्टादिना वा पङ्कजनिकर्तर्येव नियतप्रयोगवत्त्वसम्बन्धयुक्तेनावयवशक्तिशून्यपङ्कजपदेनैव वा उद्बुद्धसंस्कारादेव पङ्कजनिकर्तुः स्मृतिः, एवं स्मृते पङ्कजनिकर्तरि समुदायशक्त्या पद्मत्वविशिष्टानुभवः इति वैपरीत्येनापि वक्तुं शक्यत्वात्[१०]।

नन्ववयवमात्रव्युत्पन्नस्य पङ्कजपदेन पङ्कजनिकर्तृत्वप्रतीतेः तत्र योगः सिद्ध्यतीति चेत्तर्हि समुदायमात्रव्युत्पन्नस्य पङ्कजपदात् पद्मत्वप्रतीतेः रूढेरपि सिद्ध्या योगरूढत्वाङ्गीकारावश्यम्भावात्। इत्थञ्च अश्वकर्णादि-शब्दवत् व्युत्पत्तिद्वयसापेक्षत्वात् योगरूढोऽयं शब्दः। एतावांस्तु विशेषः। अश्वकर्णशब्दे योगरूढी भिन्नविषये। वृक्षविशेषे रूढिः, अश्व-कर्णसदृशकर्णवति पशुविशेषे रूढिरिति। इह तु ते एकविषये इति ॥

एवं विभक्त्यर्थाद्यन्यथानुपपत्त्यापि पङ्कजपदादौ रूढिसिद्धिः। तदित्थम्- पङ्कजमानयेत्युक्ते पद्मकर्मकानयनबोधोऽनुभवसिद्धः। पद्मत्व-विशिष्टस्य पङ्कजपदवृत्त्यविषयत्वे नायं बोधस्तत्रोदेतुमर्हति। यतः- प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमित्यस्ति व्युत्पत्तिः। प्रत्ययाः विभक्तिकृत्तद्धिताख्याताः। यस्मात् प्रत्ययो विधीयते सः प्रकृतिः। प्रकृते अमिति प्रत्ययः स्वप्रकृत्यर्थान्वित कर्मत्वं बोधयतीति व्युत्पत्तिः। अम्प्रकृतिश्च पङ्कजपदम्। पङ्कजपदस्यार्थो नाम शक्तिलक्षणान्यतरवृत्त्या तद्बोध्योऽर्थः। यदि पङ्कजपदस्य पद्मत्वविशिष्टे रूढिर्नाङ्गीक्रियते तदा पद्मं प्रकृत्यर्थो न स्यात्। तस्य प्रकृत्यर्थत्वाभावे च तदन्वितकर्मत्वबोधने व्युत्पत्तिविरोधः ॥

---

१०. किञ्च त्वदुक्तरीतिद्वयेन स्मृतकर्तृत्वाचितपद्मानुभवो रूढ्यैवास्त्विति योगो न सिद्ध्येत्। (त.तां., पृ.सं. १२७)

## ५.३. विभक्त्यर्थान्वये किं तन्त्रम्? -

ननु पङ्कजपदस्य पद्मे रूढ्यभावेऽपि पङ्कजपदेन पद्मं पूर्वोक्तरीत्या स्मृतं भवति। तावता तस्य प्रकृत्यर्थत्वोपपत्त्या नोक्तदोष इति चेदत्र वक्तव्यम्- प्रकृत्यर्थत्वं नाम किं कार्यकारणभावसम्बन्धेन प्रकृतिजन्यधीविषयत्वम्? अथ साहचर्यसम्बन्धेन? उताश्रयाश्रयिभावसम्बन्धेन? आहो नियतप्रयोगवत्त्वरूपसम्बन्धेन? नाऽद्यः। न्यायमते शब्दस्याकाशकार्यत्वेन पङ्कजमानयेत्युक्ते कार्यकारणसम्बन्धेन पङ्कजपदकारणस्याकाशस्य स्मृत्या प्रकृतिजन्यधीविषयत्वस्य तत्र सत्त्वात् आकाशमपि प्रकृत्यर्थः स्यात्। न चेष्टापत्तिः। तथा सति तत्कर्मकानयनबोधापत्तेः। नापि द्वितीयः। 'पटे पङ्कजमानय' इति वाक्ये पङ्कजपदसाहचर्यात् स्मृते पटशब्दे विभक्त्यर्थान्वयापातात्। न चापि तृतीयः। आश्रयाश्रयिभावेन स्मृतायां घटपदनिष्ठायां शक्तौ घटमानयेत्यादौ विभक्त्यर्थान्वयापातात्। नापि चतुर्थः। शक्त्या लक्षणया वा घटादिपदजन्यधीविषये वाच्यार्थे लाक्षणिकार्थे च विभक्त्यर्थानन्वयापातात्। किञ्च शक्तिकार्यस्य विभक्त्यर्थान्वयस्य यदि पङ्कजशब्दे शक्तिग्राहकप्रयोगेणैव निर्वाहात् शक्तिः परित्यज्यते तदा गोशब्दादावपि शक्तिग्राहकप्रयोगेणैव सर्वस्यापि निर्वाहात् शक्तित्यागापत्तिः। पक्षपाते निमित्ताभावात्। एवं प्रयोगसम्बन्धस्य विभक्त्यर्थान्वयादौ तन्त्रत्वे तस्य लक्षणादिवत् वृत्त्यन्तरत्वापत्तिश्च। न चेष्टापत्तिः। क्लृप्तशक्त्यैवोपपत्तेः। ननु गोशब्दादौ शक्तिरेवाङ्गीकार्या न तु नियतप्रयोगः। तथा सति अन्धपरम्परात्वापातात् इति चेत् समं प्रकृतेऽपि। तस्मात् क्लृप्तवृत्तिविषयत्वरूपं प्रकृत्यर्थत्वमेव विभक्त्यर्थान्वये तन्त्रम्। तथा च पङ्कजपदे वृत्त्यभावात् पद्मे

विभक्त्यर्थान्वयो न स्यात् । अतो विभक्त्यर्थान्वयोपपत्त्यर्थमवश्य-मूरीकर्तव्या पद्मत्वविशिष्टविषयिणी रूढिः ।

ननु पाचकादियौगिकशब्दे समुदायशक्त्यविषयस्यापि पाककर्त्रादेः विभक्त्यर्थान्वयदर्शनात् प्रकृते पङ्कजपदेऽपि तथा स्यादिति चेन्न । पाचकमानयेत्यत्रापि पाककर्तुः पाचकपदयोगवृत्तिविषयत्वादेव कर्मत्वा-न्वयादिकम् । पद्मत्वविशिष्टस्तु न पङ्कजपदयोगविषयः । पङ्कजनि-कर्तृत्वविशिष्टस्यैव तत्र योगवृत्तिविषयत्वात् । पाककर्तुः पाचकपदयोग-वृत्तिविषयत्वात् तत्र विभक्त्यर्थान्वयोपपत्तावपि पङ्कजपदे समुदाय-शक्त्यभावपक्षे पद्मत्वविशिष्टस्य वृत्त्यविषयत्वात् वृत्तिविषयत्वरूपं प्रकृत्त्यर्थत्वं तत्र नास्तीति तत्र विभक्त्यर्थान्वयानुपपत्तिः तदवस्थैव ।

येषां तु तार्किकाणां मते यौगिकं पदं पदसमुदायरूपत्वात् वाक्यमिति सिद्धान्तः तेषां वाक्ये वृत्त्यभावात् पाचकस्य विभक्त्यर्थभूतकर्मत्वाद्यन्वयो न स्यादेव। इत्थञ्च पङ्कजपदे रूढिसद्भावे विभक्त्यर्थान्वयान्यथानुपपत्तिरपि प्रमाणम् ।

किञ्च पङ्कजपदे यदि न रूढिः किन्तु योगमात्रं तर्हि कुमुदादावपि पङ्कजपदप्रयोगः स्यादित्यापत्तिं को निवारयेत् । पङ्कजपदेन कुमुदादि-प्रतीतिप्रसङ्गस्यापि कः प्रतीकारः? न च नियता पद्मोपस्थितिस्तत्प्रति-बन्धिका। रूढिं विना नियतोपस्थितेरेवायोगात्। नापि वृद्धानां तत्राप्रयोगः प्रतिबन्धकः[११] । प्रयोगहेतौ सत्यप्रयोगस्यैवायोगात् । नयविवेके त्वेव-मुक्तम्- 'पङ्कोत्तरजशब्दादिकं कुमुदेऽवयवशक्तेः प्रतिबन्धकम्। क्लृप्तस्य

---

११. ननु कुमुदे पूर्वेषामप्रयोगादाधुनिकानामप्यप्रयोगः.... इत्यादि
(त.चिं., शब्दखण्डे पृ.सं. ६१८)

प्रतिबन्धकत्वरूपधर्ममात्रकल्पनं लघीय:। रूढिकल्पने तु रूढि:, रूढे: योगशक्तिप्रतिबन्धकत्वश्चेति शक्तिद्वयकल्पना गरीयसी' इति[१२]। तन्न। पङ्कोत्तरजशब्दस्यैव कुमुदेऽवयवशक्तिं प्रति प्रतिबन्धकत्वे अवयवमात्रव्युत्पन्नेनापि कुमुदे पङ्कजपदाप्रयोगापात:। पङ्कजपदेन पद्मत्वविशिष्टप्रतीत्युपायानुक्तेश्च। एतेन रसे चक्षुषोऽप्रवृत्तिर्यथा स्वभावादेव तथा कुमुदेऽवयवशक्तेरप्रवृत्तिरपि स्वभावादेवेति निरस्तम्। अवयवमात्रव्युत्पन्नस्यापि कुमुदादावप्रयोगापत्तेरुक्तत्वात्।

ननु धेनुशब्दस्य धानकर्मत्वमात्रं प्रवृत्तिनिमित्तम्। 'घटे इच्च'[१३] इति धेटो 'नु' प्रत्यये धातोरिकारादेशे च सति गुणे च सति धेनुरिति रूपात्। धानकर्मत्वस्य अजमहिष्यादौ क्षीरनीरादौ च सत्त्वेऽपि न तेषु धेनुशब्दप्रयोगो लोके दृष्ट:। अत इदमङ्गीकर्तव्यं यत्- धानकर्मत्वमात्रस्य धेनुशब्दप्रवृत्तिनिमित्तत्वेऽपि 'गोत्वम्' शक्ते: प्रयोगस्य चोपाधि:। उपाध्यभावात् महिष्यादौ प्रयोगाभाव इति। तथैव च प्रकृतेऽपि अशक्यमेव पद्मत्वं पङ्कजपदशक्ते: प्रयोगस्य च नियामकमित्यङ्गीक्रियते। उपाध्यभावादेव कुमुदादौ प्रयोगाभाव इति नातिप्रसङ्ग इति चेन्न। दृष्टान्तासम्मते:। धेनुशब्दे श्रुते सति गोत्व-विशिष्टस्यैव प्रतीतिरनुभवसिद्धा। अतस्तत्र गोत्वविशिष्टे एव (रूढि:) शक्तिरिति निर्णीयते[१४]। शक्त्यभावादेव महिष्यादौ तत्प्रयोगाभाव:। न तूपाधिभावाभावाभ्यामिदम्। अन्यथा घटादिपदेष्वपि घटत्वादीनामुपाधित्वं कल्पनीयं स्यात्। न हि

१२. त.तां., पृ.सं. १३१ १३. पा.सू., उणादिसूत्रम् २९१

१४. अनन्यथासिद्धनियतपूर्ववृत्तित्वादिविशिष्टशक्तकारणादिपदवत् गोपदमपि विशिष्टे शक्तमिति तर्कताण्डवे पृ.सं. १३२।

'घट चेष्टायाम्'[१९] इति धातोरचि प्रत्यये निष्पन्नो घटशब्दः कथं चेष्टाविरहिणं कम्बुग्रीवादि-मन्तं वक्ति, कुतो वा चेष्टाविशिष्टप्राणिनं न वक्ति इत्यत्र नियामकत्वेन घटत्वं प्रयोगप्रतीत्योरुपाधिरिति स्वीक्रियते। रूढिसत्त्वतदभावाभ्यामेव सर्वसामञ्जस्यात्।

नन्वहमादिपदं हि आत्ममात्रे शक्तम्। तथाऽपि देवदत्तेनोच्चरितमहंपदं देवदत्तात्मानमेव बोधयति, नात्ममात्रम्। स्वतन्त्रोच्चारयितृत्वस्य स्वरूपसत एव तत्र धीनियामकत्वात्। 'वाच्यस्त्वया मद्वचनात्स राजा' इत्यादौ अस्मच्छब्दादुच्चारयितुः कवेर्बोधाभावस्तु तस्यान्योच्चारणानधीनोच्चारयितृत्वरूपस्वतन्त्रोच्चारयितृत्वाभावादेव। इत्थञ्च अहमादिपदे स्वतन्त्रोच्चारयितृत्वादेर्धीनियमाकत्ववत् पङ्कजपदे पद्मत्वस्य तथात्वमभ्युपेयते। अत एव न कुमुदादौ प्रसङ्ग इति चेत्- तदपि न। दृष्टान्तवैषम्यादेव। अहमादिपदे ह्यनुच्चारयितरि प्रयोगप्रत्ययौ न कदापि भवतः। इहत्वपद्मेऽपि पङ्कजं कुमुदमिति प्रयोगदर्शनात्। इत्थञ्च पङ्कजपदेन पद्मत्वरहितेऽपि पङ्कजनिकर्तृत्वबुद्धेरुत्पादेन व्यभिचारान्न पद्मत्वं पङ्कजनिकर्तृत्वधीनियामकम्।

यत्तु- 'नमति प्रणमति' 'वचनं प्रवचनम्' इत्यादौ प्रादिरुपसर्गः प्रकर्षादिबोधने द्योतकत्वरूपं सहकारिभावमाचरति। तद्वदत्रापि पद्मे प्रयोगग्रहः पङ्कजशब्दस्य पद्मबोधने सहकारी। प्रयोगग्रहरूपसहकार्यभावादेव च पङ्कजपदात् पद्मप्रतीत्यभावः नमतीति मात्रेण प्रकृष्टनमनप्रतीत्यभाववत्- इति। तदप्यसारम्। एवं सति घटादिपदानामपि घटादौ शक्तिर्न स्यात्। प्रयोगग्रहस्य सहकारित्वेनैव घटादिबोधस्य वक्तुं

---

१९. पाणिनीयधातुपाठः

शक्यत्वात् । किञ्च प्रकर्षादौ प्रादिसम्बन्धात् धातोरेव शक्तिरभ्युपगता नैयायिकैः[१६] । अस्मद्रीत्या (माध्वसिद्धान्तरीत्या) तु प्रादेरेव प्रकर्षादौ शक्तिः । अतः शक्त्यैव प्रकर्षादिबोधस्तत्र ।

प्राभाकरग्रन्थे विवरणे तु एवमुक्तम्- गोशब्दो यद्यपि धेनुभूमि-किरणाद्यनेकार्थः । तथाऽपि गोशब्देन सास्नादिमद्व्यक्तेरेव द्राक् बोधो भवति । प्रयोगप्राचुर्यमेव तत्र निमित्तम् । तथा च यथा अनेकार्थेनापि गोशब्देन सास्नादिमद्व्यक्तेरेव द्राग्धीः प्रयोगप्राचुर्यात् युक्ता तथा कुमुदसाधारणेनापि योगेन पद्मस्यैव द्राग्धीः प्रयोगप्राचुर्यदेवेति । तदेतदपि न विचारसहम् । पङ्कजनिकर्तृत्वेन पद्मबुद्धेः योगेन द्राक् सिद्धावपि पद्मत्वेन बुद्धेः रूढिं विनाऽयोगात् । निरुपपदस्य गोशब्दस्य भूकिरणादौ प्रयोगवत् पङ्कजपदस्यापि निरुपपदस्यैव कुमुदशैवालादौ प्रयोगापाताच्च । तस्मात् केवलयौगिकत्वे पङ्कजपदस्य कुमुदादौ प्रयोगादिकं दुर्वारम् ।

इत्थञ्च पङ्कजपदस्य योगरूढत्वे युक्त्यष्टकमुक्तं भवति ।

१. किं पङ्कजपदशक्यमिति प्रश्ने पद्ममिति प्रतिवचनम्

२. कोशपाठः

३. पङ्कजं पद्ममिति सहप्रयोगापत्तिः

४. समुदायव्युत्पत्त्यपेक्षा

५. योगस्यैवापलापप्रसङ्गः

१६. धातोश्चोपसर्गोपसन्धानात् प्रकर्षादौ शक्तिरेव ।

प.त.चिं., शब्दखण्डे पृ.सं. ६१६

६. पद्मत्वविशिष्टस्य विभक्त्यर्थान्वयः

७. प्रकृत्यर्थस्य शाब्दानुभवप्रवेशः

८. योगमात्रं चेत् कुमुदादावपि प्रयोगप्रसङ्ग इति ।

एवं युक्त्यष्टकेन योगरूढसिद्धिः[१७] । तदेतत्सर्वमभिप्रेत्य न्यायसुधायामप्युक्तम्- 'भेकादिष्वपि प्रयोगप्रसङ्गात्'[१८] इति । पुनरप्युक्तं तत्रैव- 'गवादिशब्दानामिव व्यवहारप्राचुर्याप्राचुर्यकृते शक्तिसाम्येऽपि प्रसिद्ध्यप्रसिद्धी, इति चेन्न । वैषम्यात् । गवादि-शब्दानामनेकार्थत्वे शास्त्रतो निश्चिते हि प्रसिद्ध्यादेः कारणान्तरं मार्गणीयम् । न चैवमेषां शब्दानामनेकत्र शक्तिरवधृता[१९] इति । भेकादिष्वपि प्रयोगप्रसङ्गादिति सुधाग्रन्थस्य भेकादिष्ववयवशक्तिप्रतिबन्धार्थं रूढिरङ्गीकार्येति नाभिप्रायः । येन प्रतिबन्धकत्वे शक्तित्वं पारिभाषिकं स्यादिति शङ्क्येत । किन्तु पद्मत्वबोधार्थमवश्यं कल्पनीयया रूढ्या भेकादिष्वतिप्रसङ्गस्यापि परिहार इत्येवास्याकूतमिति न पूर्वोक्तदोष इति ध्येयम्[२०] ।

## ५.४. वृत्तिद्वयसमाहार एव योगरूढिः -

इयश्च योगरूढिः योगरूढ्योः समाहार एव, न त्वसमाहाररूपं वृत्त्यन्तरमिति सिद्धान्तः । नन्ववयववृत्तिर्योगः, रूढिस्त्वखण्डवृत्तिः । ते चैकस्य शब्दस्यैकस्मिन्नर्थे विरुद्धे । अतः एकस्मिन्नर्थे एकस्य शब्दस्य वृत्तिद्वयायोगात् असमाहाररूपं वृत्त्यन्तरमेवेदमिति वक्तव्यमिति चेन्न । योगरूढ्योः यथाक्रमं पङ्कजनिकर्तृत्वपद्मत्वरूपभिन्नधर्मनियतयोः

---

१७. त.तां., पृ.सं. १३६

१८. न्या.सु., पृ.सं. १८८६

१९. न्या.सु., पृ.सं. १८८६

२०. वाक्यार्थचन्द्रिका, पृ.सं.१८८७

तद्धर्मद्वारा एकस्मिन् धर्मिणि समाहारसम्भवात् । योगरूढिरूपवृत्ति-द्वयस्य यत्कार्यं पङ्कजनिकर्तृत्वस्मृतिपद्मत्वस्मृतिरूपं दृश्यते तस्य वृत्ति-द्वयसमाहारेणैवोपपत्तौ वृत्त्यन्तरकल्पने गौरवाच्च । एवं सत्यसिद्धि-बाधसमाहारस्यापि हेत्वाभासान्तरत्वप्रसङ्गस्य परिहारः पूर्वमेव कृतः[२१]। इत्थं योगरूढ्योः समाहार एव योगरूढिः । इदं योगरूढेः वृत्तिद्वय-समाहाररूपत्वं श्रीमध्वाचार्यैरेव प्रतिपादितमनुव्याख्याने "... विद्वद्रूढिं च तत्रगाम् । बहुशो दर्शयत्यञ्जस्तात्पर्यात्सनिरुक्तिकम् ॥"[२२] । इत्यत्र । अत्र हि सनिरुक्तिकमिति वदता आचार्येण रूढेर्योगसाहित्यं सूचितम् ।

अत्र काचन विप्रतिपत्तिरिव द्वैतसिद्धान्ते दृश्यते । तथा हि- अनु-व्याख्यानप्राचीनटीकायां सन्न्यायरत्नावल्यां श्रीपद्मनाभतीर्थश्रीमच्चरणै-रेवमुक्तम्- 'न चावयववृत्त्यखण्डवृत्त्योरेकस्य शब्दस्यैकस्मिन्नर्थे विरुद्ध-त्वात् योगरूढिर्नाम वृत्तिर्नास्तीति वाच्यम् । तस्याः पङ्कजादिशब्देषु दृष्टत्वात्' इति । अत्र हि योगरूढ्योः समाहारे बाधकमाशङ्क्य पङ्कजादि-पदे दृष्टत्वादिति समाहार एवाङ्गीकृतः । किन्तु जयतीर्थपूज्यचरणैः न्याय-सुधायाम्- 'अवयववृत्तिर्योगः रूढिस्त्वखण्डवृत्तिः न ह्येतयोरेकत्र समावेशो युज्यते' इत्याशङ्क्य 'न हि योगरूढ्योः समाहार एव योग-रूढिरिति ब्रूमः । येन विरोधः स्यात्'[२३] इत्युक्तम् । अत्र तु योगरूढेः समाहाररूपत्वं कण्ठरवेणैव सुस्पष्टं निराकृतम् । अत्र प्राचीनटीकाविरोधः स्पष्ट एव ।

---

२१. अत्रैव २२. अ.व्या.

२३. न्या.सु., पृ.सं. १८८२

न केवलमत्र प्राचीनटीकाविरोधमात्रं, किन्तु न्यायसुधायामेव पूर्वोत्तरविरोधः सन्दृश्यते । तथाहि आनन्दमयाधिकरणे- 'बहुलातिप्रयोगतः । रूढमित्येव साध्यं स्यात्' इत्यनुव्याख्यानव्याख्यानावसरे श्रीमज्जयतीर्थैरेव 'समाहारवृत्तयो हि ताः ।'[२४] इत्यादिना रूढियोगसमाहारः व्याख्यातः । 'तत्र प्रयोगबाहुल्यं यदि तत्परता किमु' इत्यनुव्याख्यानव्याख्यावसरे च 'न ह्यस्माभिः परममुख्यतामात्रसिद्ध्यर्थं विशिष्टोपादानं क्रियते, किं नाम । समाहाररूपविधान्तरसिद्ध्ये'[२५] इति वदद्भिस्तैः स्पष्टमेव समाहाररूपत्वमभ्युपगतम् । प्रकृते अवयववृत्त्यखण्डवृत्त्योः समावेशे विरोधमाशङ्क्य 'न हि योगरूढ्योः समाहार एव योगरूढिरिति ब्रूमः'[२६] इति प्रकृत्यधिकरणे तैरेवोच्यते । तत्कथमत्र निर्णयः? किं वा वाक्यं श्रद्धातव्यम्? पूर्वोत्तरविरोधस्य वा कः प्रतीकारः? इति चेत्-

उच्यते । योगरूढानां पङ्कजादिशब्दानां अवयवशक्त्या पङ्कजनिकर्तृत्वस्य समुदायशक्त्या च पद्मत्वस्य बोधकत्वमित्येवं योगरूढ्योर्यथाक्रमं पङ्कजनिकर्तृत्वपद्मत्वरूपभिन्नधर्मनियतयोरपि तद्द्वारा एकस्मिन् धर्मिणि शब्दवृत्त्योरिव समाहारसम्भवाभिप्रायेण 'समाहारवृत्तयो हि ताः' इत्यादिग्रन्थः प्रवृत्तः । भिन्नभिन्नधर्मबोधनार्थं द्वयोरपेक्षितत्वेऽपि एकत्र धर्मसमाहारो नेत्यभिप्रायेण न हि योगरूढ्योः समाहारो योगरूढिरिति ब्रूमः' इत्ययं ग्रन्थः प्रवृत्तः । तथा च 'समाहारवृत्तयो हि ताः' इत्यत्रोक्तस्य 'न हि योगरूढ्योः....' इत्यत्रानिराकरणात्, अत्रानङ्गीकृतस्य

२४. न्या.सु.आनन्दमयाधिकरणे पृ.सं. १४३०
२५. न्या.सु.प्रकृत्यधिकरणे पृ.सं.१८८२ २६. न्या.सु., पृ.सं. १८८२

तत्राप्यनभिमतत्वात् भिन्नविषयत्वात् न पूर्वोत्तरविरोधः [२७]। एतेन प्राचीनटीकाविरोधोऽपि परिहृतः। तत्रोक्तस्यात्रानिराकरणात्। एवं योगरूढिः समर्थितः। इत्थञ्च योगो रूढिर्योगरूढिश्चेति शक्तिस्त्रिविधेति सिद्धम्।

### ५.५. मणिकारोक्तयोगरूढिसमर्थनक्रमस्यायुक्तता -

गङ्गेशोपाध्यायैस्तु गवादिशब्दे गोत्वस्य स्मृत्यर्थमेव यथा शक्तिरङ्गीकृता तथा पङ्कजशब्देऽपि पद्मत्वस्य स्मृत्यर्थमेव शक्तिः (रूढिः) इति मणिग्रन्थे प्रत्यपादि। तथा च पद्मत्वस्मृत्यर्थं रूढेरवश्यमङ्गीकर्तव्यत्वेन योगस्य च सुतरां सत्त्वेन योगरूढिसिद्धिरिति तदभिप्रायः। तर्कताण्डवकारास्तु मण्युक्तं नाभ्युपगच्छन्ति। पङ्कजादिशब्दे पद्मत्वादेरनुभूत्यर्थमेव शक्तिः। न तु स्मृत्यर्थम्। गवादिशब्देष्वपि तथैवेति व्यासतीर्थपूज्यचरणानामाशयः।

तत्र प्रथमं मणिग्रन्थं पश्यामः। तत्र हि- 'एवं पद्मं पङ्कजपदशक्यम्। ततो नियमतः पङ्कजनिकर्तृ पद्ममिति प्रतीतेः। अवयवानां तत्रासामर्थ्यात् रूढिं विना योगमात्रात् कुमुदे प्रयोगधीप्रसङ्गाच्च[२८]।' इत्यादिना पङ्कजपदस्य योगरूढत्वं समर्थ्य 'अत्र मीमांसकाः'[२९] इत्यारभ्य पङ्कजपदे रूढिनिराकरणात्मकं मीमांसकमतं पूर्वपक्षयित्वा 'उच्यते' इत्यादिना सिद्धान्तः कृतः। सिद्धान्तयता मणिकारेण एतदुक्तम्- 'अस्ति व्युत्पन्नस्य पदज्ञानानन्तरं नियमतोऽन्वयप्रतियोगिस्मृतिरतस्तद्धेतुसंस्कारोद्बोधकं

२७. सत्यतीर्थयतिकृता सुधाविवृतिः, पृ.सं. १८८३

२८. त.चिन्तामणिः, शब्दखण्ड पृ.सं. ५९०

२९. त.चिन्तामणिः, शब्दखण्ड पृ.सं. ५९

प्रतिबन्धकं विना पदज्ञानमेव। दृष्टानुविधानत्वादनुगतत्वाल्लघुत्वाच्च। न तु प्रतिपदार्थस्मृति-तत्कालोत्पन्नमनन्तमदृष्टचरमनिर्वचनीयं गौरवात्। अतः पद्मस्मृतावपि गृहीतसम्बन्धं पङ्कजपदमपि तथेति सम्बन्धत्वेन शक्तिसिद्धिः'[३०] इति। पुनस्तत्रैव 'स्यादेतत् पद्मे नियतप्रयोगरूपसम्बन्धेन पङ्कजपदादेव पद्मस्मृतिरस्तु' इत्यादिना अवान्तरपूर्वपक्षं कृत्वा प्रतियोगोऽपि तत्रैव दत्तः। तेन समग्रेण ग्रन्थेनेदमुक्तं भवति- पदं हि नासम्बद्धमर्थस्मारकम्। न च नियतप्रयोग एव पदपदार्थसम्बन्धः। गवादिशब्देष्वपि तत्प्रसङ्गेन रूढियोगयोरुच्छेदप्रसङ्गात्। न च लाक्षणिके इव वृत्त्यन्तररूपः सम्बन्धोऽस्ति। तथा च गवादिपदानां गवादिष्विव पङ्कजपदस्यापि पद्मत्वस्मृत्यर्थमेव सम्बन्धत्वेन रूढिराव-श्यकी। तेन पङ्कजपदस्य योगरूढतासिद्धिरिति।

परन्तु मणिकारस्यायं योगरूढिसाधनपन्थाः अयुक्त इत्याकलयन्ति द्वैतवेदान्तधुरन्धराः श्रीव्यासतीर्थपूज्यचरणाः। तर्कताण्डवे तैरेवमुक्तम्- 'तस्माद्गवादिशब्दे गोत्वस्येव पङ्कजशब्देऽपि पद्मत्वस्य स्मृत्यर्थमेव शक्तिरिति मण्युक्तस्यायुक्तत्वात् शाब्दद्वयेऽपि तरोरनुभूत्यर्थमेव शक्तिरित्यस्मद्रीत्यैव योगरूढिसिद्धिः'[३१] इति। तर्कताण्डवकाराणामयमाशयः- पदस्य स्मारकत्वे हि तदन्यथानुपपत्त्या शक्तिसिद्धिस्तदेव नास्तीति। तथा हि- पदं पदार्थस्मृतिमात्रोपक्षीणं, नान्वितबोधकं स्मृतः पदार्थ एवान्वितबोधक इति राद्धान्तोऽयुक्तः। एवं वदता शब्दः स्मारक एवेति पदार्थस्यैवान्वयप्रमाकरणत्वमङ्गीकृतम्। प्रमाकरणत्वञ्च प्रमाणत्वम्। तच्च पदार्थस्य न युक्तम्। प्रसिद्धं शब्दं त्यक्त्वाऽप्रसिद्धस्य

३०. त.चिन्तामणिः, शब्दखण्डे पृ.सं. ६०३ ३१. त.तां., पृ.सं. १४४

पदार्थाख्यप्रमाणान्तरस्य कल्पने गौरवात्। तदुक्तमनुव्याख्याने- 'गौरवं कल्पनेऽन्यथा' इति। न्यायसुधायामप्युक्तम्- 'किञ्च पदार्थबोध्यत्वे वाक्यार्थस्यानुमेयस्येवाशाब्दत्वम्। पदार्थाख्यसप्तमप्रमाणाङ्गीकारे गौरवञ्च स्यात्'[३२] इति। किञ्च करणं कारणविशेषः। कारणत्वञ्च कार्यनियत-पूर्ववृत्तित्वम्। पदार्थस्य च फलभूतमन्वयानुभवं प्रतिव्यापारत्वेनाभिमतां पदार्थस्मृतिञ्च प्रत्येतादृशं कारणत्वमेव दुरवापम्। वृष्टिरासीत्, वृष्टिर्भवि-ष्यतीत्यादौ पदार्थस्यातीतानागतादिरूपत्वात् कारणत्वस्यैवासम्भवे करणत्वस्य दूरापास्तत्वाच्च। न च पदार्थस्य करणत्वासम्भवेऽपि पदजन्यपदार्थस्मृतेरेव करणत्वात् न दोष इति वाच्यम्। प्रसिद्धत्यागा-प्रसिद्धकल्पनाख्यदोषद्वयात्। एवं हि वदता करणत्वेन प्रसिद्धः शब्दः त्यक्तः, करणत्वेनाप्रसिद्धा पदार्थस्मृतिश्च प्रमाणपदवीमधिरोपिता।

किञ्च करणस्य सव्यापारतानियमेन निर्व्यापारस्य पदार्थस्मरणस्य न कथङ्कारमपि करणत्वमङ्गीकर्तुं शक्यम्। न च शक्तिस्मृतिरेव व्यापारः। तस्याः पदार्थस्मृत्यजन्यत्वात्। तज्जन्यत्वविशिष्टतज्जन्यजनकत्वस्यैव तद्व्यापारत्वात्। व्युत्पत्तिकाले शब्दस्यैव करणत्वग्रहणेन पदार्थस्मृतेः करणत्वायोगाच्च। इत्थञ्च वाक्यस्थात्पदात् पदार्थस्यानुभूतिरेव न स्मृतिरपीति सिद्धान्तः। अतः पङ्कजपदात् पद्मस्मृत्यर्थं शक्तिरित्य-युक्तम्।

किञ्च पदादेव पदार्थस्मृतिरस्तु। तदर्थं पदे शक्तिकल्पना अयुक्ता। सादृश्याददृष्टादिनापि तत्स्मृतेः। नापि पदजन्यपदार्थस्मृतिः शक्ति-साध्या। गङ्गापदात् तीरस्मृतौ व्यभिचारात्। गङ्गापदस्य तीरपदार्थे

३२. न्या.सु., पृ.सं. ९९१

शक्त्यभावेऽपि तत्स्मृतेः । ननु पदजन्यपदार्थस्मृतिं प्रति शक्तिः कारणमिति नोच्यते, किन्तु शक्तिलक्षणोभयसङ्ग्राहकवृत्तित्वेनैव कारणता । तेन न व्यभिचारः । प्रकृते तु परिशेषाच्छक्तिसिद्धिः । इति चेन्न । कार्यकारणभावसम्बन्धेन घटादिपदजन्यायामाकाशस्मृतौ व्यभिचारतादवस्थ्यात् । इत्थं यदुच्यते मणिकारेण पद्मत्वस्य स्मृत्यर्थमेव पङ्कजशब्दे शक्तिरिति तन्न विचारसहम् । अतस्तत्र पद्मत्वानुभूत्यर्थमेव शक्तिरिति पूर्वोक्तक्रमेणैव योगरूढिः साधनीया ॥

## ५.६. पङ्कजपदात् कुमुदबोधप्रकारः -

ननु यदि पङ्कजशब्दः पद्मे योगरूढस्तर्हि 'रात्रौ पङ्कजानि विकसन्ति' 'पङ्कजं कुमुदमानय' इत्यादौ कथं पङ्कजपदात् कुमुदबोधः? कुमुदे रूढ्यभावात् इति चेदत्र नैयायिकाः लक्षणयेति सङ्गिरन्ते । तथा हि मुक्तावल्यां विश्वनाथतर्कपञ्चाननः - 'यत्र तु रूढ्यर्थस्य बाधः प्रति-सन्धीयते[३३] तत्र लक्षणया कुमुदादेर्बोधः । यत्र तु कुमुदत्त्वेन बोधे न तात्पर्यज्ञानं पद्मत्वस्य च बाधस्तत्र चावयवशक्तिमात्रेण निर्वाहः'[३४] इति । अयमाशयः- 'रात्रौ पङ्कजानि विकसन्ति' इत्यत्र रात्रिकाले पद्मानां विकसनायोगात् रूढ्यर्थो बाधितः । रूढ्यर्थे बाधिते पङ्कजपदेन कुमुदादीनां बोधो भवति । तत्रापि पङ्कजनिकर्तृत्वमात्रेण कुमुदबोधः अवयवशक्त्यैव । कुमुदत्वेन, पङ्कजनिकर्तृकुमुदत्वेन वा रूपेण कुमुदबोधः लक्षणयैव वृत्या । न तु शक्तिवृत्या । कुमुदत्वविशिष्टे पङ्कजपदसमुदाय-

---

३३. प्रतिसन्धीयते इत्यनन्तरं 'कुमुदत्वेन बोधे च तात्पर्यमिति पूरणीयम्' इति दिनकर्याम् ।

३४. मुक्ता. ३८४पृष्ठे दिनकरीरामुरुद्रीयसंवलिते ।

शक्तेरवयवशक्तेर्वा अभावात्। अत एव 'रूढ्यर्थस्य बाधः प्रतिसन्धीयत इत्यस्यानन्तरं कुमुदत्वेन बोधे च तात्पर्यमिति पूरणीयम्'[३५] इत्युक्तं दिनकर्याम्। अन्यथा अवयवशक्तिमात्रेण कुमुदादेर्बोधोपपत्त्या लक्षणयैवेति मुक्तावलीग्रन्थोऽनुपपन्नः स्यात्।

मणिकारेणापि पङ्कजशब्देन कुमुदबोधो लक्षणयैवेति सुस्पष्टं साधितम्[३६]। यद्यप्यत्र कुमुदे पद्मत्वस्यायोग्यतया योगेनैव पङ्कजनिकर्तृत्वं पङ्कजपदेन कुमुदे बोध्यत इति युक्तम्, तथाऽपि पङ्कजपदेन पद्माश्रितत्त्वेनैवोपस्थितस्य पङ्कजनिकर्तृत्वस्याश्रयाकाङ्क्षा नास्तीति कुमुदान्वययोग्यस्य स्वतन्त्रस्य कर्तृत्वस्योपस्थित्यर्थं लक्षणा आवश्यकी। यथा पुरोडाशकपालपदे अधिष्ठानलक्षणा[३७]। इत्थञ्च लक्षणया कुमुदबोध इति मणिकारस्य सिद्धान्तः।

नेदमूरीकुर्वन्ति द्वैतवेदान्तविचक्षणाः श्रीव्यासतीर्थाः। तैरिदमुक्तं ताण्डवे- 'मण्डपं भोजयेद्' इत्यादौ यौगिकार्थपरे मण्डपपदे रूढ्येवात्रापि रूढ्या पूर्वं स्वार्थोपस्थापनेऽपि पश्चात् कुमुदान्वयार्थं रूढेर्मूकीभावे सति योगेनैव स्वतन्त्रस्य कर्तृत्वस्योपस्थित्याकाङ्क्षासम्भवेन लक्षणानपेक्षणात्'

---

३५. दिनकरी, पृ.सं. ३८४

३६. 'पङ्कजं कुमुदमित्यत्र समुदायेनैव पङ्कजनिकर्तृत्वमशक्यं स्वार्थपद्मसम्बन्धि लक्ष्यते' इत्यादि -त.चिन्तामणौ शाब्दखण्डे पृ.सं. ६३६

३७. तर्कताण्डवव्याख्याने न्यायदीपे अस्यार्थः उक्तः - ''पुरोडाशकपालेन तुषानुपवपति' इति वाक्येन पुरोडाशनिर्वर्तककपाले तुषाणां स्थापनान्वयार्थं पुरोडाशकपालेनेत्यस्य 'अधिष्ठानभूते कपाले' इत्यर्थबोधाय यथा लक्षणा तथेत्यर्थः'' इति। -(न्यायदीपयुततर्कताण्डवे पृ.सं. १४५)

इति। अयं भावः- मण्डपशब्दः गृहविशेषे रूढः। मण्डं यवागूं पिबतीति व्युत्पत्त्या मण्डपानकर्तरि यौगिकः। तत्र मण्डं पिबतीति व्युत्पत्त्या मण्डपानकर्तारमित्येवंरूपयौगिकार्थतात्पर्येण प्रयुक्ते मण्डपं भोजयेति वाक्ये रूढ्या पूर्वं गृहविशेषोपस्थापनेऽपि तत्र भोजनान्वयानुपपत्त्या भोजनान्वयार्थं रूढेर्मूकीभावे सति योगेनैव मण्डपानकर्तुर्देवदत्त-स्योपस्थितिर्यथा भवति तथैव प्रकृते पङ्के जायत इति व्युत्पत्त्या पङ्कजनि-कर्तारमित्येवंरूपयौगिकार्थतात्पर्येण प्रयुक्ते 'पङ्कजं कुमुदमानय' इति वाक्ये रूढ्या पूर्वं पद्मोपस्थानेऽपि कुमुदान्वयानुपपत्त्या पश्चात् कुमुदा-न्वयार्थं रूढेर्मूकीभावे सति योगेनैव स्वतन्त्रस्य पङ्कजनिकर्तुः कुमुदा-देरुपस्थितिर्युक्तैवेति।

नन्वस्मिन् पक्षे रूढेर्मूकीभावाश्रयणं दोषः। अतो लक्षणाश्रयणमेवो-चितमिति चेन्न। त्वत्पक्षेऽपि तस्य समत्वात्। लक्षणापक्षेऽपि हि समुदाय-शक्तेः शाब्दानुभवाप्रवेशकत्वलक्षणो मूकीभाव आवश्यकः। न केवलं समुदायशक्तेरेव मूकीभावः अवयवशक्तेरपि मूकीभावाश्रयणेनाधिक एवास्मिन् पक्षे दोषः। पङ्कजनिकर्तृत्वस्य लक्षणया बोधितत्वात् पुनरवयवशक्त्यापि बोधने पौनरुक्त्यापत्तेः।

न चैवं 'गङ्गायां घोषः' इत्यादावपि लक्षणाभावप्रसङ्गः। तत्र गङ्गाशब्दादौ हि तच्छक्तेर्मूकत्वेन प्रवाहानुपस्थितावपि रूढशब्दस्य तस्यावयवशक्त्या तीरबोधकत्वासम्भवात् तीरोपस्थित्यर्थं लक्षणा आवश्यकी। 'पङ्कजं कुमुदमानय' इत्यत्र तु समुदायशक्तेर्मूकत्वेन पद्मानुपस्थितौ अवयवशक्त्यैव स्वतन्त्रकर्तृत्वोपस्थितिसम्भवात् किं लक्षणया? यद्यवयवशक्त्या सिध्यन्नप्यर्थः लाक्षणिक इत्येवाङ्गीकार-

निर्बन्धस्तर्हि 'मण्डपं भोजय' इत्यत्रापि मण्डपशब्दस्य मण्डपानकर्तरि लक्षणा स्यात्। न चेष्टापत्तिः। मणिकारेण- ''क्वचिद्यौगिकार्थान्वय-सम्भवेऽपि रूढिपूर्विका लक्षणा, यथा 'मण्डपं भोजय' ''[३८] इत्यादिना लक्षणापक्षं पूर्वपक्षयित्वा तस्य निरासात्[३९]।

पुरोडाशकपालपदवदत्रापीति यदुक्तं तन्न। पुरोडाशकपालपदे हि कपालमात्रार्थकत्वे पुरोडाशपदवैयर्थ्यम्। अधिष्ठानभूतकपालार्थकत्वे तु अधिष्ठाने शक्तः शब्दो नास्तीति तद्बोधार्थं लक्षणा। इह तु पङ्कजनिकर्तृत्वमात्रार्थकतायां न पदान्तरवैयर्थ्यम्। नापि तच्छक्तशब्दाभाव इति वैषम्यात्।

ननु शब्दस्य जातिविशिष्टव्यक्तौ शक्तिः। गोशब्दस्य गोत्वविशिष्ट-गोव्यक्तौ शक्तत्वेऽपि 'गौर्द्रव्यम्' इत्यत्र गोशब्दः न गोत्वविशि-ष्टार्थकः। विशेषणे गोत्वे द्रव्यत्वस्याभावात्। किन्तु लक्षणया व्यक्तिमात्र-वाचक इत्यङ्गीकृतः। तथा च गोत्वविशिष्टव्यक्तौ शक्तस्य गोपदस्य यथा गौर्द्रव्यमित्यादौ एकदेशे लक्षणा तथैव पङ्कजनिकर्तृत्वविशिष्ट-पद्मव्यक्तौ शक्तस्य पङ्कजशब्दस्य पङ्कजनिकर्तृत्वमात्रे लक्षणैव युक्तेति चेत्- न। शक्तेरेकत्वेनानेकत्वेन च वैषम्यात्। गोत्वविशिष्टव्यक्तौ विद्यमाना गोपदशक्तिरेकैवेति नैयायिकेनाप्यङ्गीकृतम्। 'जात्याकृति-व्यक्तयः पदार्थः' इति सूत्रे 'पदार्थः' इत्यत्रैकवचनप्रयोगस्य शक्त्यैक्याभि-

३८. प.त.मणिः, पृ.सं. ६९९

३९. एवञ्च मण्डपादिपदेऽवयवशक्तेः कुण्ठितत्वात् रूढ्यर्थस्योपस्थितस्य परम्परयापि वाक्यार्थप्रतीत्यन्वयाय तत्पूर्विका लक्षणेति चेन्न। तप्ते पयसि.... इत्यादिना। -प.त.चि.मणिः, पृ.सं. ७०२

प्रायकत्वेन व्याख्यातत्वात्। इह तु पङ्कजपदशक्तिर्नैका। पद्मबोधिका समुदायशक्तिरन्या, पङ्कजनिकर्तृबोधिकाऽवयवशक्तिश्चान्यैव। ततश्च गोत्वे तद्विशिष्टे च विद्यमानायाः शक्तेरेकत्वेन गौर्द्रव्यमित्यत्र द्रव्यमात्र-बोधार्थं लक्षणाया आवश्यकत्वेऽपि पङ्कजपदे पङ्कजनिकर्तृबोधका-वयवशक्तेः पद्मबोधकसमुदायशक्तिव्यतिरिक्तत्वेन समुदायशक्तेर्मूकी-भावे सत्यवयवशक्त्यैव पङ्कजनिकर्तृबोधोपपत्तेः। नानाशक्तिमत्त्यप्येक-स्मिन् अर्थे लक्षणाङ्गीकारे नानार्थानां हरिसैन्धवादिशब्दानामप्येकस्मिन् अर्थे लक्षणा स्यात्। न हि तत्र लक्षणाऽस्ति। 'हरिर्गर्जति' 'हरिर्जयति' इत्यादौ विष्णुकण्ठीरवादिशक्तिमता हरिशब्देन बहूनामर्थानामुप-स्थापनेऽपि गर्जनाद्यन्वयोपपत्त्यर्थमर्थान्तरस्य मूकीभावे शक्त्यैवार्थ-बोधकत्वं यथा तथाऽत्रापि। अतो न कुमुदादौ लक्षणा।

एवमेव मणिकारमते- स्थलपद्मं चम्पकादिवत् विजातीयमेव। तथा च तत्र रूढ्यर्थतावच्छेदकपद्मत्वजातेरभावेन रूढेरसम्भवात् पङ्कजनि-कर्तृत्वस्याप्यभावेन योगस्याप्यसम्भवात् लक्षणयैव पङ्कजपदात् स्थल-पद्मबोधः। विश्वनाथतर्कपञ्चाननेनाप्युक्तम्- 'यदि तु स्थलपद्मं विजातीय-मेव तदा लक्षणयैव' इति[४०]। तदेतदप्ययुक्तमित्युक्तं ताण्डवे- 'स्थलपद्ममप्यबाधितपद्मत्वानुभवात् पुण्डरीकादिवत् पद्मजातीयमेव। एवञ्च रूढार्थमण्डपपदे इवात्राप्यवयवशक्तेः स्थलान्वयार्थं मूकीभावे सति रूढ्यैव स्वतन्त्रस्य पद्मत्वस्योपस्थितिसम्भवात् न लक्षणा' इति[४१]। 'स्थलपङ्कजमानय' इत्येवं स्थलपद्मतात्पर्येण प्रयुक्ते वाक्ये योगेन

---

४०. मुक्ता. पृ.सं. ३८५ ४१. त.तां., पृ.सं. २४८

पङ्कजनिकर्तुरुपस्थापनेऽपि स्थलेनान्वयानुपपत्त्या स्थलान्वयार्थं योगस्य मूकीभावे सति रूढ्यैव स्थलपद्मस्य बोधात् नात्रापि लक्षणेति भावः ।

एवं पङ्कजशब्दः पद्मे योगरूढः । कुमुदादौ केवलं यौगिकः । स्थलपद्मे तु केवलं रूढः । योगरूढानामपि शब्दानां प्रत्येकमेकैकवृत्त्या एकैकार्थान्वयस्थले शक्तिरस्तीति सिद्धान्तः । अत एव श्रीमन्मध्वाचार्यैः विष्णौ योगरूढानामप्याकाशादिशब्दानां भूताकाशादौ रूढ्यादिकं स्वीकृतम् । तथा हि दृश्यते अनुव्याख्याने -

> तेषु तेषु पदार्थेषु रूढिरङ्गीकृता यतः ।
> प्रयोजनबहुत्वेन तस्य तस्याविरोधतः ।
> उपदेशादिसामर्थ्याद्विष्णौ शक्तिश्च गृह्यते ।। इति[४२] ।

भगवान् नारायणः सर्वशब्दवाच्य इति सिद्धान्तानुरोधं समेषामेव शब्दानां भगवति यौगिकत्वादिना शक्तावङ्गीकृतायां भगवति व्युत्पत्त्ययोगः, अवयवानामपि विष्ण्वर्थकत्वात्; कर्मानुष्ठानलोपः; लोकव्यवहारोच्छेदप्रसङ्गश्चेत्यादिशङ्कायां तेषु तेष्वितीदं वाक्यं प्रवृत्तम् । अस्यार्थस्तु- प्रयोजनबाहुल्येन= ज्योतिष्टोमादिशब्दानां योगेन हरौ व्युत्पत्त्युपपत्तिः, कर्मानुष्ठानसम्भवः, लोकव्यवहारानुच्छेदश्चेत्येवं प्रयोजनानां बहुत्वेन कारणेन तेषु तेषु पदार्थेषु= तत्तच्छब्दवाच्यतया निगमनिघन्टुव्याकरणादिप्रसिद्धेष्वर्थेषु (तत्तच्छब्दानां) रूढिरङ्गीकृता यत; रूढिशब्दोऽत्र योगस्याप्युपलक्षणम्, यस्मात् रूढ्यादिकमङ्गीकृतं तस्मात् तस्य तस्याविरोधतः तं तमर्थमपरित्यज्य, उपदेशादिसामर्थ्यात्

४२. अ.व्या.श्लो. ३३३,३३४

उपदेश-लिङ्ग-प्रकरणादिबलेन सर्वशब्दानां विष्णौ च विष्णावपि शक्तिः महायोगविद्धद्रूढिरूपा शक्तिः गृह्यत इति।

इत्थश्च योगरूढस्यापि शब्दस्य योगमात्रेण रूढिमात्रेण वाऽर्थ-बोधकत्वस्य सिद्धान्तसिद्धत्वात्, प्रामाणिकत्वाच्चास्यार्थस्य पङ्कजादि-पदानां कुमुदादौ न लक्षणा।

॥ इति पञ्चमः परिच्छेदः ॥

॥ अथ षष्ठः परिच्छेदः ॥

## ६. अमुख्यवृत्तिनिरूपणम्

रूढिर्योगो योगरूढिश्चेति त्रिधा भिन्ना अभिधा एतावता प्रबन्धेन निरूपिता। अभिधायां योगरूढिरिति प्रभेद एव नास्तीति वादिनां निराकरणेन योगरूढिसमर्थनद्वारा अभिधात्रैविध्यञ्च समर्थितम्। प्रसङ्गात् योगरूढत्वेन समर्थितस्य पङ्कजपदस्य स्थलपद्मकुमुदादौ लक्षणाङ्गीकर्तृवादो निरस्तः, शक्तिश्च समर्थिता। इदानीं प्रकृतमनुसृत्य लक्षणागौण्योर्लक्षणमुच्यते।

**लक्षणा-**

मुख्यार्थसम्बन्धो लक्षणा। 'प्रयोगयुक्तसादृश्यं सम्बन्धो वाऽप्यमुख्यतः। वृत्तिहेतुरिति ज्ञेयः...'[१] इत्यनुव्याख्यानोक्तदिशा मुख्यार्थसम्बन्धं निमित्तीकृत्य वृत्तिर्वा लक्षणा। अत्र मूले 'अमुख्यतः' इत्येतत् समासे गुणभूताया अपि बुद्ध्या पृथक्कृताया वृत्तेर्विशेषणम्। ततश्च अमुख्यायाः गौण्याः, लक्षणायाश्च वृत्तेः प्रयोगयुक्तसादृश्यं, तत्सम्बन्धो वा हेतुरिति ज्ञेय इति तस्यार्थः। यस्य शब्दस्य यत्रार्थे प्रयोगः= सामर्थ्यम् तस्य मुख्यार्थस्य प्रवृत्तिनिमित्तातिरिक्तं तत्सादृश्यं निमित्तीकृत्यान्यत्र वृत्तिर्गौणी। तत्सम्बन्धं निमित्तीकृत्य वृत्तिस्तु लक्षणेत्युक्तं भवति[२]। उपलक्षणा च गौणी चेति निर्देशकाले लक्षणायाः प्रथमं निर्दिष्टत्वेऽपि गौणी प्रथमं निरूपिता। तत्र निमित्तं तु- नैयायिकादिभिः विवाद एव। ते हि गौणीं वृत्तिं पृथक्त्वेन नाभ्युपगच्छन्ति।

---

१. अ.व्या. श्लो. ३३८ २. न्या.सु., पृ.सं. १८९२

सादृश्यस्यापि सम्बन्धत्वेन लक्षणायामेवान्तर्भूतत्वादिति। तन्निराकर्तुमेव पश्चादुद्दिष्टापि गौणी प्रथमं लक्षिता।

अयं भावः- सादृश्यं न सम्बन्धः। सम्बन्धत्वेन लौकिकप्रतीतिरेव हि सम्बन्धत्व-साधिका। न हि लौकिकाः सादृश्यं सम्बन्धत्वेन प्रति-यन्ति। न च विशिष्टबुद्धिनिया-मकत्वात्सादृश्यमपि सम्बन्ध एवेति वाच्यम्। सम्बन्धत्वेन लौकिकप्रतीत्यभावात्। अन्यथा कश्चित् यदि- 'लक्षणा नाम नास्ति, सम्बन्धस्यापि एकस्थानत्वादिसादृश्यरूपत्वेन गौण्यामन्तर्भूतत्वात्' इति वदेत् तदा किमुत्तरम्? नैवं लौकिकी प्रतीतिरिति चेत्। तत्किं सादृश्यं सम्बन्धत्वेन प्रतियन्ति लौकिकाः? अत्र यद्वक्तव्यं तत्सर्वं गौण्याः लक्षणातो भेदनिरूपणसन्दर्भे निगद्यते। इत्थञ्च सादृश्यस्य सम्बन्धत्वाभावात् मुख्यार्थसम्बन्धाद् व्यतिरिक्ता मुख्यार्थसादृश्यरूपा गौणीवृत्तिरस्ति।

एवं मुख्यार्थसम्बन्धः, मुख्यार्थसम्बन्धनिमित्तिका वृत्तिर्वा लक्षणा। मुख्यार्थसादृश्यं तन्निमित्तीकृत्य वृत्तिर्वा गौणी।

इमे द्वे अपि वृत्ती रूढारूढभेदेन द्विविधे। रूढलक्षणा, अरूढलक्षणा; रूढगौणी, अरूढगौणी चेति। अरूढलक्षणा, अरूढगौणी च सामान्यतः निरुपपदलक्षणागौणीशब्दाभ्यां व्यवह्रियेते।

प्रयोजनाभावेऽपि महाजनप्रयोगप्राचुर्येण सिद्धा लक्षणा रूढ-लक्षणा। मञ्चोपविष्टपुरुषाणां क्रोशने मञ्चाः क्रोशन्तीति यथा। यथा वा 'राजाऽयं गच्छति' इति। सपरिवारस्य राज्ञो शिबिकादिना गमन-दशायां राजाऽयं गच्छतीति बहुलः प्रयोगोऽस्ति। तत्र राजाऽराजसमुदाये

राजशब्दस्य रूढलक्षणा। यद्वा कश्चित् रथ्यापुरुषं गर्विष्ठं भिक्षुकं वा दृष्ट्वा 'अयं महाराजो गच्छति' इति प्रयोगः। 'अस्य का संसारचिन्ता' इत्यर्थे अयं प्रयोगः। अत्र प्रयोजनाभावादियं रूढलक्षणेति भावः[३]। 'कुन्ताः प्रविशन्ति' इत्यादीन्यपि रूढलक्षणायामुदाहरणानि।

गङ्गायां घोष इत्यरूढलक्षणा। पावित्र्यसामीप्यमन्दाकिनीमन्दानिलबन्धुरत्वादिप्रतिपादनेच्छयैव सत्यपि स्वायत्ते शब्दप्रयोगे 'गङ्गायां घोषः' इत्यमुख्यप्रयोगात्।

प्रयोजनमनुद्दिश्यैव सादृश्यं निमित्तीकृत्य बहुलप्रयोगेण सिद्धा वृत्ती रूढगौणी। यथा मृद्रवादौ गवादिपदस्य। मृण्मयी गोपुत्थलिका, रूप्यमयी गोप्रतिमा, चित्रलिखिता गौर्वा 'इयं गौः' इति गोशब्देन बहुलं व्यवह्रियते। किमेषा गौः? नैव। प्रतिमैव, चित्रं वा। गोसादृश्यात् गोशब्देन व्यवहारः। प्रयोजनन्तु नास्त्येवात इयं रूढगौणी। 'रथस्थं केशवं दृष्ट्वा पुनर्जन्म न विद्यते' इत्यादावपि रथस्थकेशवप्रतिमायां केशवशब्दप्रयोगो रूढगौण्या। अद्यतनकाले चलच्चित्रदूरदर्शनादौ चित्रं दृष्ट्वा 'प्रधानमन्त्री भाषते' 'भीमसेनजोषी गायति' इत्यादिरपि प्रयोगः सादृश्यनिमित्तकः गौण एव।

'सिंहो देवदत्तः' इत्यत्र त्वरूढगौणी। देवदत्ते क्रौर्यगाम्भीर्याद्युपपादनेच्छया सादृश्यं निमित्तीकृत्य तादृशप्रयोगात्। 'गौर्बाहीकः' इत्यत्रापि तथा। बाहीको नाम देशविशेषः। तथा चोक्तं कर्णपर्वणि-

---

३. श्रीनिवासतीर्थिया सुधाटिप्पणी, पृ.सं., १९८०

'पञ्चानां सिन्धुषष्ठीनामन्तरं ये समाश्रिताः ।
बाहिका नाम ते देशाः न तत्र दिवसं वसेत् ।।'

इति । न तत्र दिवसं वसेदित्युक्तत्वात् धर्मबहिर्भूतत्वात् बाहिका इत्युक्तं भवति । बाह्ये भवाः बाहिका इति व्युत्पत्तेः । वबयोरभेदात् वाहिका इत्यपि । अत्र भारतव्याख्यातार एवमाहुः - शतद्रुर्विपाशी इरावती वितस्ती चन्द्रभागेति पञ्चनद्यः । सिन्धुनदस्तु षष्ठः । तन्मध्यपतितो देशो बाहिक इति । व्युत्पत्त्यन्तरमपि तत्रैव दर्शितम्-

वहिकश्च वहीका च विपाशायां पिशाचकौ ।
तयोरपत्यं वाहीकाः नैषा सृष्टिः प्रजापतेः ।। इति ।

वहिकवहीकनामकयोः पिशाचदम्पत्योरपत्यानि एव वाहीका इति तदर्थः । पिशाचापत्यभूतत्वादेव एषां जाड्यमान्द्याद्युपेतत्वात् गौर्बाहीक सति गौणप्रयोगः । बाहीकदेशे भवः पुरुषो वा बाहीकः[४] ।

एवं 'वाचस्पतिरयं प्रवचनं करोति' इत्यादयोऽपि प्रयोगा गौणा द्रष्टव्याः ।

## ६.१.लक्षणास्वरूपविषये मणिकाराः -

मणिग्रन्थे तु ''लक्षणा च वृत्त्यन्तरम् । यत्र वाच्यार्थान्वयानुपपत्त्या वाच्यसम्बन्धोपस्थापिते वाक्यार्थान्वयः । यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदस्य तीरे''[५] इत्यारभ्य लक्षणा निरूपिता । ततश्च 'अथ तीरे शक्तिरेव'[६] इत्यादिना लक्षणाभावमाशङ्क्य गौरवादननुभवाच्च न तीरे

४. मन्नारीकृष्टाचार्यकृतचषकटिप्पणी (न्या.सु., पृ.सं. १८९८)
५. मणिः, पृ.सं. ६६०
६. मणिः, पृ.सं. ६६२

शक्तिः, शक्यसम्बन्धरूपैकलक्षणाङ्गीकार एवोचितः लाघवादित्युक्तम् । अन्ते लक्षणास्वरूपं सिद्धान्तयता गङ्गेशोपाध्यायेन इदमुक्तम्- 'लक्षणा च शब्दात् परम्परया अशक्यासदृशस्यान्वयपरोपस्थितिरूपा शक्यसम्बन्धादशक्यासदृशान्वयपरोपस्थितिरूपा वा अशक्यासदृशान्वयप्रतियोग्युपस्थितिहेतुः स्वशक्यसम्बन्धो लक्षणेति परमार्थः । उपस्थितिहेतुर्हि वृत्तिः, शक्तिवत् । अत एव क्लृप्तेन स्वार्थसम्बन्धेन लक्ष्योपस्थितिसम्भवात् न तदर्थं शक्तिः''[७] इति । महता प्रबन्धेन मणिग्रन्थे लक्षणास्वरूपविषये पक्षचतुष्टयं सिद्धान्तितमिति प्रतिभाति । अशक्योपस्थितिर्लक्षणेत्याद्यः पक्षः । शक्यसम्बन्धादशक्यासदृशान्वयपरोपस्थितिर्वा सेति द्वितीयः । अशक्योपस्थितिहेतुः शक्यसम्बन्धो वासाविति तृतीयः। अशक्यासदृशान्वयप्रतियोग्युपस्थितिहेतुः स्वशक्यसम्बन्धो वा लक्षणेति तुरीयः पक्षः ।

मण्युक्तमिमं पक्षचतुष्टयमपि नोरीकुर्वन्ति शब्दतत्त्वकोविदाः व्यासतीर्थाः । तैरुक्तं ताण्डवे- 'न तु मण्युक्तरीत्या.... लक्षणा । चतुर्ष्वपि पक्षेष्वभिप्रेतान्वयपरा स्मृतिरूपोपस्थितिरेव नास्तीत्युक्तत्वात्[८] ।' इति । अयं भावः- वाक्यस्थात् पदात् पदार्थस्यानुभूतिरेव न तु स्मृतिरिति पूर्वमेवोपपादितम्[९] । अत्र चतुर्ष्वपि पक्षेषु अन्वयपरा स्मृतिर्घटकीभूता । उपस्थितेः स्मृतिरूपत्वात् । इत्थञ्च लक्षणालक्षणेऽन्तर्भूताया उपस्थितेरेव निराकृतत्वात्, अप्रामाणिकत्वाच्च तस्याः, पक्षचतुष्टयमपि निराकृतं वेदितव्यमिति ।

---

७. मणिः, पृ.सं. ६७९ ८. त.तां., पृ.सं. ९५२

९.. मणिकारोक्तयोगरूढिसमर्थनक्रमस्यायुक्तताप्रदर्शनसन्दर्भे अत्रैव ।

किञ्च अशक्योपस्थितिः, शक्यसम्बन्धादशक्यासदृशान्वयपरोपस्थितिर्वा लक्षणेत्याद्यपक्षद्वये उपस्थितेः लक्षणात्वमुक्तम्। उपस्थितिश्च स्मृतिरूपा आत्मनिष्ठा। न तु शब्दनिष्ठा। लक्षणा तु शब्दनिष्ठा। आत्मनिष्ठाया उपस्थितेः शब्दनिष्ठलक्षणात्वं वदतस्तस्य नास्ति देवोऽपि रक्षकः। किञ्चाशक्योपस्थितिर्लक्षणेत्याद्यपक्षे घटशब्दात्कार्यकारणसम्बन्धेनाकाशोपस्थितावतिव्याप्तिः। तस्याः शक्त्यविषयपदार्थोपस्थितिरूपत्वात्। एवं गौण्यामप्यतिव्याप्तिः। द्वितीयपक्षेऽव्याप्तिरपि दोषः। शक्येन सदृशे सम्बद्धे वस्तुनि सम्बन्धस्य विवक्षया लक्षणायां अशक्यासदृशान्वयपरोपस्थितेरभावात्। तदेवं मण्युक्तं लक्षणास्वरूपं न विचारसहम्।

अपि च यदुच्यते वाद्यन्तरेण- 'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते' अर्थात् अभिधेयस्य= प्रवाहादेः अविनाभूतस्य= तीरादेः प्रतीतिर्लक्षणेति तदप्यविचारजल्पितम्। मञ्चाः क्रोशन्तीत्यादावव्याप्तेः। तत्र मञ्चपुरुषयोरविनाभावाभावात्। ननु तत्रापि क्रोशनसमयेऽविनाभावोऽस्ति। तावता लक्षणासिद्धिरिति चेत्- अस्तु। तर्हि 'धूमोऽस्ति' इति वाक्यादुत्पन्नायां वह्न्यनुमितावतिव्याप्तिः। तत्र ह्यभिधेयो धूमः। तदविनाभूतो वह्निः। तत्प्रतीतित्वस्य धूमजन्यवह्निप्रतीतौ सत्त्वात्।

ननु गङ्गादिशब्दस्य तीरादिप्रत्ययजनने न साक्षात्सम्बन्धोऽस्ति। किन्तु शब्दस्य साक्षात्सम्बन्धः अभिधेयभूते प्रवाहादौ। तत्सम्बन्धः तीरादाविति साक्षात्स्वसम्बन्धवदभिधेयसम्बन्धवत्त्वरूपपरम्परासम्बन्ध एव। तथा च शब्दस्याभिधेयाविनाभूतप्रतीतिर्लक्षणेत्यस्य परम्परासम्बन्धप्रतीतिर्लक्षणेत्यर्थः। इत्थञ्च परम्परासम्बन्धघटकप्रतीतिर्लक्षणा,

इति चेन्न। एवं वदता अविनाभावशब्देन लक्ष्येण सह परम्परासम्बन्ध-घटकत्वं विवक्षितम्। परन्तु अविनाभावो नाम नियतसम्बन्धः। त्वदु-क्तार्थस्तु अविनाभावपदार्थैकदेशेन सम्बन्धेनैव घटत इति नियमांश-वैयर्थ्यं प्रसज्यते॥

नापि स्वार्थसम्बन्धेनेदं पदममुमर्थं बोधयिष्यतीति वक्तुरभिप्रायो लक्षणा। अपौरुषेये वेदे वक्तुरेवाभावेन तत्र वक्तुरभिप्रायरूपलक्षणा-योगात्। लक्षणायाः शब्दधर्मभूतायाः वक्तृनिष्ठाभिप्रायरूपत्वायो-गाच्च। इत्थश्च मणिकाराद्युक्तलक्षणास्वरूपस्यायुक्तत्वात् शक्यसम्बन्धं निमित्तीकृत्य वृत्तिरेव लक्षणा।

नन्वथापि शक्यसम्बन्धं निमित्तीकृत्य वृत्तिर्लक्षणेत्युक्ते 'गामुच्चारय' 'हरिमुच्चारयेत्' इत्यादावव्याप्तिः। तत्र हि गोपिण्डस्य परब्रह्मणो वा उच्चारणकर्मत्वायोगात् गामिति हरिमिति च द्वितीयान्तस्य गोपदमिति हरिपदमिति चार्थो लक्षणया गृह्यते। अत्र च गोपदस्य गामिति पदस्य शक्यो गोपिण्डः। तत्सम्बन्धो गोशब्दे नास्तीति अव्याप्तिः दुर्वारैवेति चेत्- न। तत्रापि सम्बन्धस्य सत्त्वात्। तथा हि- गोपिण्डगोशब्दयोः परब्रह्महरिशब्दयोश्च संयोगाद्यभावेऽपि वाचकत्वरूपः (शक्तिरूपः) सम्बन्धः अस्त्येव। तावतैव शक्यसम्बन्धं शक्तिरूपं निमित्तीकृत्य वृत्तिः गोशब्दे हरिशब्दे च युज्यत एवेति नाव्याप्तिः[१०]।

ननु शक्यसम्बन्धं निमित्तीकृत्य वृत्तिः, शक्यसम्बन्धो वा लक्षणा। 'गामुच्चारय' इत्यत्र शक्यसम्बन्धो शक्तिरेव। तर्हि एतादृशे स्थले

१०. त.तां., पृ.सं. १५६

शक्यसम्बन्धस्य शक्ति(अभिधा)रूपत्वात् गोपदस्य गोपिण्डे इव गोपदेऽपि अभिधावृत्तिः स्यादिति चेदत्रोच्यते। अभिधास्थले गाम् आनयेत्यादौ यथा शक्तिः शक्तित्वेन बोधहेतुः न तथा गामुच्चारये-त्यादौ। शक्यसम्बन्धित्वेनैवात्र शक्तेः बोधहेतुत्वात्। इत्थञ्च गामिति द्वितीयान्तस्य गोपिण्डे शक्तिरेव। गोपदबोधे तु शक्तेरेव शक्यसम्बन्ध-त्वेऽपि शक्यसम्बन्धित्वेन तस्य बोधहेतुत्वात् नाभिधात्वमिति भावः।

नन्वेवमपि 'जबगडदशमाह' इत्यत्र कथम्? तत्र शक्यस्यैवाभावेन शक्यसम्बन्धनिमित्तिकाया वृत्तेरयोगादिति चेत्- न। तत्रापि वर्णानां प्रत्येकमुच्चारणकर्मत्वात् प्रत्येकञ्चाक्षराणामेकाक्षरकोशेष्वर्थवत्त्वावगमात् शक्यसम्बन्धोऽस्त्येव । तथा हि कोशाः- 'जं कटीभूषणे पत्न्याम्' इति, 'बं कुम्भे वरुणे बिन्दौ', 'गं गीते गा च गाधायाम्' 'डः पुमान् विषये शम्भौ' 'दं क्लीबे पानवैराग्यकलत्रेषु' इति च। तदेतदभिप्रेत्योक्तं तर्कताण्डवे- जबगडदशमाहेत्यादिलक्षणायामपि वर्णानां प्रत्येकमुच्चारण-कर्मत्वात्प्रत्येकञ्चाक्षराणामेकाक्षरकोशेष्वर्थवत्त्वावगमाच्छक्यसम्बन्धोऽ-स्त्येव[११]।' इति।

एवञ्च गङ्गाशब्दात् शक्त्याख्यसाक्षात्सम्बन्धेन पूरबोधः। परम्परा-सम्बन्धेन (शक्यसम्बन्धेन) तु तीरबोधः। एवं परम्परासम्बन्धेन शब्दस्यैव तीरबोधकत्वोक्त्या विभक्तीनां प्रकृत्यर्थान्वितस्वार्थाभिधायित्वात् तीरस्य सप्तम्यर्थान्वयो न स्यादित्यापत्तिरपि निरस्ता। इत्थञ्च मुख्यार्थसम्बन्धो वा तन्निमित्तीकृत्य वृत्तिर्वा लक्षणेति सिद्धान्तः।

---

११. त.तां., पृ.सं. १५७

एवं मुख्यार्थसादृश्यं निमित्तीकृत्य वृत्तिर्गौणी । अत्र केचन- 'गौर्वाहीकः' इत्यादिगौणवृत्तौ स्वार्थसहचारिणो गुणाः जाड्यमान्द्यादयः लक्ष्यमाणाः गोशब्दस्य वाहीके वृत्तौ निमित्तमित्याहुः । तथा हि तद्वचनम्- 'लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता' इति । तन्न । तथात्वे गौण्याः लक्षणातो भेदाभावप्रसङ्गात् । गोशब्दस्य वाहीके वृत्तौ लक्ष्यमाणगुणानां निमित्ततायाश्चोपपत्तिशून्यत्वात् । लक्ष्यमाणगुणसादृश्याद्गुणान्तरं लक्ष्यते ततो गुणी लक्ष्यत इति त्वनानुभाविकम्[१२] ।

यदप्यन्येनोच्यते स्वार्थसहचारिगुणाभेदेन परार्थगतगुणा एव लक्ष्यन्त इति तत्तु गुणानां भेदस्याक्षादिमानसिद्धत्वेनापेशलम् । तस्मात् सदृशगुणाश्रयत्वं निमित्तीकृत्य वृत्तिर्गौणीत्येव युक्तम् ।

**६.२. लक्षणाबीजविचारः -**

'गङ्गायां घोषः' इत्यत्रैव लक्ष्यार्थो बुध्यते, न तु गङ्गायां मत्स्य इत्यत्र । 'छत्रिणो यान्ति' इत्यत्रैव छत्र्यच्छत्रिसमुदाये लक्षणा, न तु 'छात्राः गच्छन्तीत्यादौ । छत्रिणो यान्तीत्यत्रापि नास्ति क्वचन लक्षणा समेषामपि समुदायिनां छत्रवत्त्वे । 'गङ्गायां मकरः' इत्यत्र यद्यपि नास्ति लक्षणा । मकरस्य पुलिनाधिकरणकत्वे कदाचित् तत्रापि गङ्गापदस्यास्त्येव नदीपुलिने लक्षणा । तथा च लक्षणाऽत्र कार्या न वेति लक्षणानियामकं लक्षणाबीजं किमिति चिन्तायां मम्मटस्तु हेतुत्रयमाह -

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्यार्थो लक्ष्यते यत्सा लक्षणाऽरोपिता क्रिया ॥

---

१२. न्या.सु., पृ.सं. १८९८

इति[१३]। 'मञ्चाः क्रोशन्ति' इत्यादौ रूढितः, 'गङ्गायां घोषः' इत्यादौ पावित्र्यादिज्ञापनरूपप्रयोजनात् अन्यार्थः अमुख्यार्थः यत् यस्मात् व्यापारात् लक्ष्यते ज्ञायते सा आरोपिता क्रिया आरोपितः शब्दव्यापारः लक्षणेत्यर्थः। शब्दव्यापारस्यारोपितत्वञ्च मुख्यार्थव्यवहितार्थनिष्ठत्वमिति ज्ञेयम्। मुख्यार्थबाधे तद्योगे इति निमित्तार्थे सप्तम्यौ ज्ञेये[१४]। रूढितोऽथ प्रयोजनात् इत्यत्र वैकल्पिकैकैकहेतुविवक्षया मुख्यार्थबाधः, तद्योगः, रूढिप्रयोजनयोरन्यतरदिति लक्षणायां हेतुत्रयमनेनाभिप्रेतम्।

बाधो नामानुपपत्तिः। सा चान्वयानुपपत्तिरेवेति प्राञ्चः। तथा सति 'गङ्गयां घोषः' इत्यादौ घोषपदस्यैव मकरादिलक्षणया 'गङ्गायां पापी गच्छति' इत्यादौ गङ्गापदस्यैव नरकादिलक्षणया चान्वयानुपपत्ति-परिहारापत्तेः, 'काकेभ्यो दधि रक्ष्यताम्' 'छत्रिणो यान्ति' इत्यादौ अन्वयानुपपत्त्यभावाच्च तात्पर्यानुपपत्तिरेव लक्षणाबीजमिति नवीनाः प्राहुः। अत एव विश्वनाथोऽपि-

'लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः' इत्याह[१५]। इत्थञ्च मुख्यस्यार्थस्यानुपपत्तेरनुपयोगाच्च प्रत्यक्षादिप्रमाणेन बाधे निमित्ते, मुख्यार्थेन सह लक्ष्यार्थस्य सम्बन्धे च निमित्ते सति रूढेर्वा प्रयोजनाद्वा

---

१३. काव्यप्रकाशिका - द्वितीयोल्लासः, श्लो.१.

१४. उभयत्र निमित्तार्थे सप्तम्यौ। तेन रूढितः प्रयोजनात् इति पञ्चमीसमानार्थकतया क्रियाभिसम्बन्धः। - का. प्र. टिप्पणी, पृ.सं. ८२

१५. कारिकावली - शब्दखण्डे।

लक्षणा; इति वदता मम्मटेन लक्षणायां हेतुत्रयमभिहितमित्यत्र नास्ति[१६] विवादः ।

नैयायिकैरप्येतदेव त्रयं लक्षणाबीजमित्यूरीकृतम् ।

परन्तु इदमत्र विचारणीयं यत् मुख्यार्थबाधादिः किं लक्षणाबीजम् उत अमुख्यार्थग्रहणबीजमिति । द्वैतवेदान्तविचक्षणैस्तु शक्यसम्बन्ध-मात्रं लक्षणाबीजं, मुख्यार्थबाधप्रयोजने तु अमुख्यार्थग्रहणे हेतुरिति सिद्धान्तितम् ।

तथा हि- मुख्यार्थबाधस्तावत् (मुख्यार्थानुपपत्तिः) लक्षणायां न हेतुः । लक्षणास्थले हि वक्ता शब्दमुच्चारयति । प्रतिपत्ता च तदर्थं प्रतिपद्यत इति वक्ता, शब्दः, प्रतिपत्ता चेति त्रयमपेक्षितम् । मुख्यार्थबाधो हि लक्षणाबीजं भवन् वक्त्रा, शब्देन, प्रतिपत्त्रा वा अपेक्षितः स्यात् । तत्र किं सः शब्देनाशक्यबोधनार्थमपेक्ष्यमाणत्वात् लक्षणायां हेतुः? उत वक्त्रा प्रयोगार्थमपेक्ष्यमाणत्वात्? आहो प्रतिपत्त्रा लक्ष्यप्रतिपत्त्यर्थ-मपेक्ष्यमाणत्वात्? नाऽऽद्यः । शब्दो ह्यशक्यबोधनार्थं शक्तिस्थानीयं शक्यसम्बन्धमेवापेक्षते, न तु मुख्यार्थबाधम् । 'गङ्गायां घोषः' इत्युक्ते गङ्गाशब्दस्तीरं बोधयति । तीरं न गङ्गापदशक्यम् । अशक्यस्यैव बोधनेऽतिप्रसङ्गः । अतो गङ्गाशब्दः नियामकमपेक्षते । नियामकश्च शक्तिस्थानीयः शक्यसम्बन्ध एव । तादृशं शक्यसम्बन्धमेव गङ्गाशब्दो अशक्यतीरबोधने अपेक्षते । न तु मुख्यार्थानुपपत्तिम् । वक्ताऽपि अनेन

१६. तथा च मुख्यार्थबाध-तद्योग-रूढिप्रयोजनान्यतररूपहेतुत्रयसहकारेणेत्यर्थः। -का.प्र.टिप्पणी, पृ.सं. ८३ (एन्.एस्. वेङ्कटनाथाचार्यः)

सम्बन्धेन गङ्गापदं तीरं बोधयिष्यतीत्यभिप्रेत्यैव प्रयुङ्क्ते । न तु मुख्यार्थानुपपत्तिर्वक्त्रा अपेक्ष्यते[१७] । अनुपपत्तिदर्शनस्य बोधकशब्द-प्रयोगोत्तरकालीनत्वात् । अमुख्यवृत्तिसाध्यप्रयोगोत्तरकालीनानुपपत्ति-दर्शनस्यामुख्यवृत्तिकारणत्वासम्भवात् । अनुपपत्तिदर्शनस्यास्य प्रथमोप-स्थितमुख्यार्थत्यागमात्रहेतुत्वेन तीरबोधनेऽनपेक्षितत्वाच्च । तदेवं शब्देन वक्त्रा वाऽनपेक्षितेयमनुपपत्तिः प्रतिपत्त्रा मुख्यार्थत्यागायापेक्ष्यते ।

'पूर्वायोगे परग्रहः'[१८] इति वदता आचार्यवर्येणापि स्पष्टमेवेदमु-दितम् । पूर्वो मुख्यार्थः । तदयोगश्च तद्बाधः । मुख्यार्थे बाधिते परग्रहः अमुख्यार्थग्रहणमिति तदर्थः । अमुख्यार्थग्रहणे मुख्यार्थानुपपत्तिरुप-युज्यत इति भावः । तत्रापि न लक्ष्यप्रतिपत्त्यर्थं तस्यापेक्षा । किन्तु मुख्यार्थत्यागायैव । इत्थञ्च मुख्यार्थानुपपत्तिः न लक्षणायां हेतुः । प्रतिपत्तुस्तदपेक्षा तु व्युत्पत्तिवशात् प्रथमप्रतिपन्नमुख्यार्थोत्सर्जनार्थमेवेति स्थितम् ।

## ६.३. प्रयोजनस्य वृत्तिहेतुत्वनिराकरणम् -

प्रयोजनमपि न वृत्तिहेतुः । शब्दस्याचेतनत्वेन तेन बोधनाय प्रयोजनानपेक्षणात् । बोधकार्यत्वेन तस्य बोधाहेतुत्वाच्च । किन्तु सति मुख्ये अस्मदायत्ते शब्दप्रयोगे कस्मादमुख्यं प्रयुञ्ज्महे इति वक्त्रा प्रतिपत्त्रा

---

१७. यथोक्तं सुधायाम्- मुख्यार्थानुपपत्तिदर्शनममुख्यार्थग्रहणस्य हेतुः । अत एव हि न शब्देनापेक्ष्यते । नापि प्रयोक्त्रा । किन्तु प्रतिपत्त्रैव । शब्दो हि व्युत्पत्तिवशात् मुख्यमेवार्थं बुद्धावारोहयति । न च प्रतिपत्ता तं सहसोत्स्रष्टु-मुत्सहत इति तदर्थमेवानुपपत्तिमपेक्षते । इति । न्या.सु. १९१०

१८. अ.व्या. श्लो. ३४०

च प्रयोजनमनुसन्धीयते। एवं मुख्यार्थबाधप्रयोजनयोरन्यत्रैवोपक्षीणत्वात् प्रतिपादकत्वरूपायां वृत्तौ न तयोर्हेतुत्वम्। किन्तु-

> 'प्रयोगयुक्तसादृश्यं सम्बन्धो वाऽप्यमुख्यतः।
> वृत्तिहेतुरिति ज्ञेयः पूर्वायोगे परग्रहः[१९]॥'

इत्यनुव्याख्यानोक्तदिशा अमुख्यवृत्त्योः गौणीलक्षणयोः क्रमेण मुख्यार्थसादृश्यं मुख्यार्थसम्बन्धश्च हेतुरिति ज्ञातव्यम्। 'पूर्वायोगे परग्रहः' इत्यत्रायोगग्रहणं प्रयोजनस्याप्युपलक्षणम्। मुख्यार्थानुपपत्तिः (मुख्यायोगः) लक्षणागौण्योः सर्वत्रापेक्षिता। प्रयोजनन्तु निरूढलक्षणायां रूढगौण्याश्चाभिधातुल्यत्वेन नापेक्ष्यते। इत्थं यथा मुख्यार्थानुपपत्तिः (मुख्यायोगः) सार्वत्रिकः, न तथा प्रयोजनमिति विशेषसूचनायैव प्रयोजनं स्वशब्देनानुक्त्वा उपलक्षणतया सञ्जग्राहाचार्यः। 'मुख्यायोगेऽमुख्यग्रहः' इति वक्तव्ये 'पूर्वायोगे परग्रहः' इत्युक्तिः लक्षितलक्षणानुगमार्थम्। न हि लक्षितलक्षणा मुख्यासम्भवमात्रेणाश्रीयते। किन्तु लक्षितस्याप्यसम्भवात्। तथा च मुख्यार्थबाधो लक्षणाबीजमिति वदता लक्ष्यार्थबाधो न लक्षणाहेतुरित्यवधारितं स्यात्। मुख्यार्थासम्भवमात्रस्य च लक्षितलक्षणायामुक्तरीत्याऽभावेन 'मुख्यार्थबाधे....' इत्याद्ययुक्तम्।

यदि मुख्यार्थबाधो न लक्षणाहेतुस्तर्हि कुतः प्रतिपत्तृभिस्तन्मृग्यत इत्यत्र 'मुख्यार्थान्वयानुपपत्तिस्तु अमुख्यार्थे तात्पर्यज्ञानहेतुः' इति ताण्डवे उक्तम्[२०]। अत्रेदं विचारणीयम्- द्वैतसिद्धान्ते उक्तवृत्तिव्यतिरिक्ता

---

१९. अ.व्या., श्लो.३४०. २०. त.तां., पृ.सं. १६१

तात्पर्यवृत्तिर्नास्ति । 'तात्पर्यवृत्तिस्तु नातिरिच्यत'[२१] इति न्यायसुधोक्तेः। 'वाचकत्वं हि तात्पर्यं यदर्था अखिला रवाः'[२२] इति तृतीयाध्यायचतुर्थपादे भाष्यकारेणाप्युक्तत्वात्। 'न च वाचनिकस्तात्पर्यार्थ इति विशेषः। तन्मानाभावात्'[२३] इति कर्मनिर्णये आचार्योक्तेश्च। तथा च लक्षणावृत्तिव्यतिरिक्ततात्पर्यवृत्तेरभावेन मुख्यार्थानुपपत्तेस्तात्पर्यज्ञानहेतुत्वोक्त्यैव लक्षणावृत्तिहेतुत्वं प्राप्तम्। न सा लक्षणाहेतुः, सम्बन्ध एव हेतुरिति तु पूर्वमुक्तम्, तत्कथमिति। अत्रैतावदेव समाधेयम्प्रतिपादकत्वमेव तात्पर्यं, नातिरिक्तवृत्तिरिति सिद्धान्त इति सत्यम्। मुख्यार्थसम्बन्धः तादृशतात्पर्यस्वरूपे हेतुः। अन्वयानुपपत्तिस्तु तज्ज्ञप्ताविति विशेषः। तथा च शक्यसम्बन्धः गङ्गादिशब्दस्य तीरादिप्रतिपादकत्वं सम्पादयति। मुख्यार्थभूतप्रवाहघोषाद्यन्वयानुपपत्तिदृष्टिस्तु तीरप्रतिपादकत्वज्ञाने हेतुः। न तु प्रतिपादकत्वे हेतुः। अत एव 'तात्पर्यज्ञानहेतुः' इत्येवोक्तं ताण्डवे। न तु तात्पर्यहेतु-रिति। न चैवं प्रथमोपस्थितमुख्यार्थत्यागमात्रहेतुः स इति पूर्वोक्तविरोधः। तस्य तद्द्वारा वृत्तिज्ञानहेतुत्वाभिप्रायकत्वेनाविरोधात्।

नैयायिकास्तु केचित् 'छत्रिणो यान्ति' इत्यत्र छत्रिणि गमनान्वयस्य 'यष्टीः प्रवेशय' इत्यत्र यष्टिषु प्रवेशान्वयस्य 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र काकेषु दधिरक्षणावधित्वान्वयस्य च सम्भवात् अन्वयानुपपत्तेरभावात् तात्पर्यानुपपत्तिरेव हेतुरित्याहुः। तन्न। अन्वयानुपपत्तिमज्ञात्वा

---

२१. न्या.सु. - १९०१ पृष्ठे।

२२. अ.व्या.श्लो.१६३६. (तृतीयाध्यायस्य चतुर्थपादः)

२३. कर्मनिर्णयः (खण्डार्थनिर्णयः)

तात्पर्यानुपपत्तेर्दुर्बोधत्वात्। प्रवाहे हि घोषान्वयानुपपत्तिमज्ञात्वा 'गङ्गायां घोष:' इति प्रयोक्तुराप्तस्य प्रवाहे तात्पर्यानुपपत्ति: कथं वा ज्ञातव्या। अतस्तात्पर्यानुपपत्तिं ज्ञातुं पूर्वमेवान्वयानुपपत्तेर्ज्ञातव्यत्वात् साऽन्वयानुपपत्तिरेव तात्पर्यज्ञाने हेतु:। ननु तर्हि 'छत्रिणो यान्ति' इत्यादावव्याप्ति:। अन्वयानुपपत्तेस्तत्राभावादिति चेन्न। तत्राप्यस्त्येवान्वयानुपपत्तिरिति दोषाभावात्। तथा हि- 'छत्रिणो गच्छन्ति' इत्यत्र प्रकरणादिना गच्छन्तीत्यस्यैव छत्र्यच्छत्रिगमनमित्यर्थोऽवगत:। 'यष्टी: प्रवेशय' इत्यत्रापि प्रवेशयेत्यस्य भोजनप्रयोजनकप्रवेशनमित्यर्थोऽवगत: प्रकरणादेव। रक्ष्यतामित्यस्य दध्युपघातकमात्राद्रक्षणमर्थ इति चावगत:। तथा चात्रान्वयानुपपत्तेरेव सत्त्वेन नाव्याप्ति:।

ननु 'गङ्गायां घोष:' इत्यादावन्वयानुपपत्तिवत् अयोग्यत्वनैराकाङ्क्ष्ये अपि स्त:। घोषस्य निबिडाधाराकाङ्क्षिण: प्रवाहे नैराकाङ्क्ष्यात्। सति चैवं किमित्यन्वयानुपपत्तिमात्रं तात्पर्यज्ञप्तौ बीजम्? अयोग्यत्वनैराकाङ्क्ष्ये अपि बीजे कस्मान्न स्याताम्? अत्र कश्चिदाह- यथा 'गङ्गायां घोष:' इत्यादावन्वयानुपपत्ति:, छत्रिणो यान्तीत्यादौ तु तात्पर्यानुपपत्तिर्बीजमेवं क्वचिदयोग्यत्वं क्वचिन्नैराकाङ्क्ष्यं बीजमस्तु। न चाननुगम:। मुख्यार्थानुपपत्त्यादीनाममुख्यार्थप्रतिपादकत्वज्ञापकत्वेन तेषामननुगमेऽप्यदोषात्। न हि ज्ञापकेऽननुगमो दोष:। वह्निज्ञापकानां धूमालोकादीनामननुगमेऽप्यदोषात् इति। परन्तु नैतदेवं विज्ञातुं शक्यम्। न हि अयोग्यत्वनैराकाङ्क्ष्ये मिलिते हेतू इत्यूरीक्रियते। अन्यतरज्ञानेऽपि लक्षणादर्शनात्। प्रत्येकमेकैकं हेतुरित्यङ्गीकारे चाननुगमदोषोऽस्त्येव। ज्ञापकेऽननुगमो न दोषायेति यदुक्तं तदिदमसारम्। ज्ञापकेऽप्यनुगमसम्भवे त्यागायोगात्। अन्वया-

नुपपत्तिव्याप्यत्वेनानुगमे तु अन्वयानुपपत्तेरेव तद्बीजत्वात्। किञ्च 'गङ्गायां घोषः' इत्युक्ते सति अन्वयानुपपत्तेरुपस्थितेरनन्तरमेवायोग्यत्वादीनामुपस्थितिरिति प्रथमोपस्थितत्वाच्चान्वयानुपपत्तिरेव लक्षणाबीजम् ॥

इत्थञ्च मुख्यार्थसम्बन्ध एव लक्षणाहेतुः । मुख्यार्थान्वयानुपपत्तिस्तु अमुख्यार्थपरिग्रहणद्वारा तात्पर्यज्ञाने हेतुरिति सिद्धान्तः ॥

## ६.४. लक्षणागौण्योरभिधाव्यतिरिक्तत्वसमर्थनम्[२४] -

ननु गङ्गाशब्दस्य पूरे शक्तिः, तीरे तु लक्षणेति मा भूत् भेदः । पूरे इव तीरेऽपि शक्तिरेवास्तु । यथा हरिशब्दः शक्त्यैव कपि-केसरि-नारायणादिनानार्थबोधकः नानार्थकत्वात् तथा गङ्गाशब्दोऽपि नानार्थ एव। एवं 'विद्याविहीनः पशुः' 'सिंहो माणवकः' इत्यादावपि पशुशब्दस्य पशाविव विद्याविहीने पुरुषेऽपि, सिंहशब्दस्य सिंहे इव माणवकेऽपि हर्यादिशब्दवत् शक्तिरेवास्तु। किं लक्षणागौण्योः वृत्त्यन्तरयोः कल्पनेन? इति चेन्न । शक्तिग्राहकप्रमाणाभावेऽपि गङ्गादिशब्दैः तीरादिप्रतीतेः । तथा हि- शक्तिग्रहस्तु व्याकरणादित इत्युक्तम्। तत्र व्याकरण-उपमान-कोश-वाक्यशेष-विवृति-प्रसिद्धपदसान्निध्यानि गङ्गाशब्दस्य तीरे शक्तिं न ग्राहयन्ति । वृद्धव्यवहार एव तद्ग्राहक इति वक्तव्यम्। परन्तु वृद्धव्यवहारदर्शनादेरभावेऽपि मुख्यार्थबाधसम्बन्धाद्यनुसन्धानवतः पुंसो गङ्गादिशब्देन भवत्येव तीरादिप्रतीतिः । इत्थञ्च शक्तिग्राहकप्रमाणा-

२४. पदार्थतत्त्वचिन्तामणावपि यद्यप्यस्मिन् विषये बहुशो विचारः कृतः (प.त. चिन्तामणौ शब्दखण्डे लक्षणावादे) तदुक्त्युक्तिमरोचमानो व्यासतीर्थोऽपि अधिकयुक्तिविवक्षया तर्कताण्डवे पुनरिमं विचारमुपाक्षिपत् (त.तां. १६५पृष्ठे) तत्सारांशोऽत्र सङ्गृहीतः ।

भावेऽपि गङ्गादिशब्देन तीरादिबोधात् न तेषां तीरादौ शक्तिरिति शक्त्यतिरिक्ता काचन शब्दवृत्तिरभ्युपगन्तव्या ।

ननूक्तस्थले गङ्गापदात् तीरधीः घोषपदसमभिव्याहारादेव भवति । न तु मुख्यार्थबाधाद्यनुसन्धानादिस्तत्र निमित्तम् । पदान्तरसमभिव्याहारेण पदाज्जायमानार्थधीश्च शक्त्यैवोत्पन्ना । समभिव्याहारस्यैव प्रसिद्धपद-सान्निध्यवत् शक्तिग्रहणप्रमाणत्वात् इति चेत्- तदपि न । शक्तिर्हि साक्षात्सम्बन्धः । लक्षणा तु शक्यसम्बन्धरूपा क्लृप्तः परम्परासम्बन्धः । गङ्गाशब्दस्य पूरेण साक्षात्सम्बन्धोऽस्ति । कोशादिना तद्ग्रहात् । तीरेण तु क्लृप्तपरम्परासम्बन्धादेव बोधकत्वमुपपद्यते । इन्द्रियस्य रूपादिनेव । रूपेण साकं चक्षुषः संयोगादिसाक्षात्सम्बन्धो नास्ति । तथापि संयुक्तसमवायात्मकपरम्परासम्बन्धाद्यथा तस्य रूपबोधकत्वं तथा शक्तेर-भावेऽपि शक्यसम्बन्धरूपक्लृप्तपरम्परासम्बन्धादेव बोधकत्वोपपत्तौ समभिव्याहारस्य साक्षात्सम्बन्धकल्पकत्वं न युज्यते । अन्यथा रूपेण रूपत्वेन च साकं चक्षुषः साक्षात्सम्बन्धः कल्प्यः स्यात् ।

हर्यादिशब्दवत् गङ्गादिशब्दानामपि नानार्थतेति यदुक्तं तन्न । हरिशब्दार्थाः कपिसिंहनारायणादयो हि नान्योन्यं सम्बद्धाः । अन्योन्य-सम्बन्धवत्त्वे हि क्वचिच्छक्तिः, तत्सम्बद्धे चार्थे लक्षणेति स्यात् । प्रवाह-सम्बद्धे तीरे गङ्गाशब्दस्येव । न चैवं हर्यादिपदेषु । यद्यप्यस्त्येव एकत्रा-वस्थानादिरूपः कश्चन सम्बन्धः कपिसिंहादावपि । अक्षशब्दार्थानां दिङ्नेत्रघृणिभूजलादीनान्तु संयोग एवास्ति सम्बन्धः । तथापि तत्र कस्य शक्यता कस्य शक्यसम्बद्धतेति विनिगमनाविरहात् सर्वस्य शक्यतैव

स्वीकृता[२५]। प्रकृते गङ्गाशब्दार्थयोः पूरतीरयोः निकटसम्बन्धवत्त्वात् उभयोरपि वाच्यार्थत्वं नोचितम्।

लाघवयुक्त्या च लक्षणैव युक्ता। तथा हि- तीराद्यनन्तैः सह क्लृप्त-पूरादिरूपैकशक्यसम्बन्धेषु, अर्थात् 'नद्यां घोषः' इत्यत्र पूरसम्बन्धस्तीरे, 'मञ्चाः क्रोशन्ति' इत्यत्र मञ्चसम्बन्धः पुरुषे, 'मार्गाश्चलन्ति' इत्यत्र मार्गसम्बन्धः प्राणिष्वित्यादिरूपसम्बन्धेषु वृत्तित्वरूपधर्ममात्रकल्पनं लघु। तद्विषयिण्यः अनन्ताः शब्दनिष्ठाः वृत्तिरूपाः शक्त्याख्याः धर्मिणः, तद्ग्राहकाः वृद्धव्यवहाराः, तद्ग्रहाः, तत्स्मृतयश्चेत्यनेककल्पना गुर्वी।

किञ्च 'नद्यां घोषः' इत्यत्र नदीशब्दस्य तीरे शक्तिं वदद्भिर्वक्तव्यम् किं तीरमात्रे नदीपदस्य शक्तिरुत नदीतीरे इति । नाऽद्यः। सरःसमुद्र-तीरादेरपि बोद्धव्यत्वप्रसङ्गात्। अतः नदीतीरे नदीपदशक्तिरिति द्वितीय एवोरीकार्यः। इत्थञ्च 'नद्यां मत्स्यः' इत्यत्र नदीशब्दस्य नदीमात्रे शक्तिः; 'नद्यां घोषः' इत्यत्र तु नदीशब्दस्य नदीतीरे शक्तिरिति तीरार्थे प्रयोगेऽपि पूरशक्तिरावश्यकी। तथा सति च 'नागृहीतविशेषणा बुद्धिर्विशिष्टेषूप-जायते' इति न्यायेन प्रथमोपस्थितत्वेन नद्यां शक्तेरावश्यकत्वे सति शक्यसम्बन्धादेव तीरधीसम्भवात् तत्रापि शक्तिकल्पनां प्रमाणिकाः न सहन्ते।

किञ्च गङ्गाशब्दस्य प्रवाहतीरयोरुभयत्र शक्तेरेवाङ्गीकारे अक्षहर्यादि-शब्दवत् नानार्थत्वमङ्गीकृतं स्यात्। गङ्गाशब्दस्यानेकार्थत्वे च अनुपपत्ति-

२५. श्रीराघवेन्द्रतीर्थीयतर्कताण्डवटिप्पणी (प्रकाशः), पृ.सं. १६७

पुरस्सरं तीरधीः न स्यात्। न ह्यक्षादिशब्देषु तथाधीः। एवं 'गङ्गां पश्य' इत्यादौ तीरं पूरं वेति सन्देहश्च स्यात्। 'वने हरिरस्ति' इत्यादौ नानार्थके कपिः सिंहो वेत्यादिसन्देहदर्शनात्।

ननु गोशब्दो धेनुभूमिवाङ्मरीच्यादिवाचक इति नानार्थः। तथापि 'गां पश्य' इत्युक्ते भूमिं धेनुं वेति सन्देहो नोदेति। तद्वदत्रापीति चेन्न। 'गां पश्य' इत्यादावपि सास्नादिमद्व्यक्तौ पृथिव्यादौ च शक्तिस्मृतौ भवत्येव सन्देहः। 'गङ्गां पश्य' इत्युक्ते पूरानुपपत्तिरहितस्थले तीरे वृत्तिज्ञाने सत्त्वेऽपि न कदापि सन्देह इति विशेषात्। अत एव 'नवकम्बलवानपि देवदत्तः शैत्येन कम्पते' इति श्रुतवन्तोऽभियुक्ताः अनुयुञ्जते- किं नवशब्दः सङ्ख्यावाची? आहो नावीन्यवाचीति। न ह्यभियुक्ता एवमनुयोगं कुर्वन्ति 'गङ्गायां घोषः' इति श्रुत्वा। अतो नोभयत्र शक्तिः।

किञ्च शक्तिरूपसाक्षात्सम्बन्धमादाय परम्परासम्बन्धरूपलक्षणापलापवादिना कुठारस्य काष्ठेन साक्षात्सम्बन्धो दृष्ट इति कुठारग्राहिण हस्तस्यापि काष्ठेन साक्षात्सम्बन्धः एव कुतो न स्वीक्रियते। पुरोडाशाज्यादिद्रव्यस्य देवतोद्देशेन द्रव्यत्यागात्मकयागेन साकं साक्षात्सम्बन्धो दृष्ट इति प्रोक्षणोत्पवनादिद्रव्यसंस्कारेणापि समं कुतो वा स नादीयते। कुतो वा श्रोत्रस्य शब्देन साक्षात्सम्बन्ध दृष्ट इति चक्षुषो घटरूपेण, श्रोत्रस्यैव वा शब्दत्वेन साकं साक्षात्सम्बन्धः नाभ्युपगतः? अत्र सर्वत्रापि परम्परासम्बन्धमङ्गीकुर्वता शब्दस्यार्थेन तु स नास्तीति किमित्याग्रहः क्रियते ? अङ्गीकृतश्च शब्दार्थयोः परम्परासम्बन्धः रूढिव्यतिरिक्तो

योगः । अवयवशक्तिरूपयोगस्यावयवार्थद्वारा समुदायार्थबोधकत्वेन परम्परासम्बन्धरूपत्वात् रूढेस्तु साक्षात्सम्बन्धत्वात् ।

किञ्च 'गङ्गायां घोषः' इत्यत्र गङ्गाशब्दस्यैव गङ्गाविशिष्टतीरे शक्तिकल्पने 'द्वारम्' इत्यत्रापि द्वारशब्दस्यैव द्वारविशिष्टपिधाने शक्तिकल्पनेन 'पिधेहि' इत्याध्याहारश्च न सिद्ध्येत् ।

यद्यपि येन पुंसा 'गङ्गायां घोषः' इति तीरे एव प्रथमप्रयोगो गृहीतः तस्य तत्र शक्तिग्रहो भवति । तथापि 'गङ्गायां मत्स्यः' 'तीरे घोषः' 'इदं तीरं न गङ्गा' इत्या-द्युत्तरकालीनबहुप्रयोगदर्शनात् स पुरुषः तीरे शक्तिग्रहस्य भ्रमत्वं निश्चिनोति। गङ्गा-शब्देन तीरधीस्तु असाधुशब्दादिव शक्तिभ्रमादित्यवधारयति सः । शक्तिभ्रमाज्जायमानायाः प्रतीतेः प्रमात्वमपि वह्निमति धूमभ्रमजन्याया अनुमितेरिव यादृच्छिकम् ।

ननु हरीतकीशब्दः वृक्षविशेषवाचकः फलवाचकश्चेति नानार्थः । न तु वृक्षमात्रवाचकस्य तस्य फले लक्षणा । तथा सति तद्धितलुगुक्त्ययोगात् । तथा हि- भगवान् पाणिनिः 'हरीतक्यादिभ्यश्च'[२६] इति सूत्रे हरीतक्यादिशब्देभ्यः विहितस्य फलप्रत्ययस्य लुपं वक्ति। आमलक्यादि-शब्देष्वपि 'फले लुक्'[२७] इत्यत्र सूत्रे फलप्रत्ययस्य लुकं वक्ति । इत्थं तद्धितलुकमङ्गीकृत्य निष्पन्नस्य हरीतकीशब्दस्य वृक्षे इव फलेऽपि यथा शक्तिरेवाभ्युपगता तथा गङ्गासम्बन्धीत्यर्थे सिंहसदृश इत्यर्थे च गङ्गादि-शब्दात् 'तस्येदम्'[२८] इति सूत्रेणाण् प्रत्यये पुष्पमूलेषु बहुलमिति वार्तिके बहुलग्रहणेन तस्य लुपि कृते 'लुपि युक्तवद्व्यक्तिवचने'[२९] इति सूत्रेण

---

२६. पा.सू-४-३-१६७ २७. पा.सू.४-३-१६३
२८. पा.सू.४-३-१२० २९. पा.सू.१-२-५१

पूर्ववल्लिङ्गवचनयोः प्राप्तत्वेन गङ्गासम्बन्धिनीत्यर्थे गङ्गायामितिशब्देन लक्षणां विनैव गङ्गासम्बन्धितीरप्रतीतेः, सिंहसदृशमाणवकप्रतीतेश्चोपपत्तेः अभिधयैव सर्वं सेत्स्यति; किममुख्यवृत्त्या? इति चेन्न। यदि सिंहशब्दस्य सिंहे माणवके च, गङ्गाशब्दस्य गङ्गायां तीरे चोक्तविधयाभिधैव स्यात्तदा सिंहगङ्गाशब्दोच्चारणे सिंहगङ्गयोः पूर्वं प्रतीतिः तदयोगे चानुसंहितेऽर्थान्तरे प्रतीतिरिरिति न स्यात्। न हि हरीतक्यादिशब्दोच्चारणे सत्ययं क्रमोऽस्ति। किन्तु वृक्षे फले च स्वातन्त्र्येण प्रतीते सति प्रकरणादिवशेन अन्यतरनियन्त्रणं क्रियते। ततश्च गङ्गादिशब्दे पूराद्यनुपपत्तिपुरस्सरं तीरादिप्रतीतिवत् हरीतक्यादिशब्दे वृक्षानुपपत्तिपुरस्सरं फलप्रतीत्यभावेन वैषम्यात् न हरीतकीदृष्टान्तेन लक्षणानिराससम्भवः।

इत्थञ्च

१. गङ्गाशब्दस्य तीरे शक्तिसत्त्वे प्रमाणाभावात्

२. तीरेऽपि शक्त्यङ्गीकारे गौरवात्

३. तीरे शक्त्यङ्गीकारेऽपि पूरे शक्त्यङ्गीकृतेरावश्यकत्वात्

४. पूरानुपपत्तिपुरस्सरमेव तीरादिबोधकत्वात्

५. गङ्गावाचकमिदं तीरवाचकं वेति सन्देहाजननात्

६. योगाद्यपलापश्च स्यादित्याद्यतिप्रसङ्गाच्चेति युक्तिषट्केन गङ्गादिशब्दस्य न तीरे शक्तिरिति स्थितम्।

ननु तर्हि मास्तु गङ्गासिंहशब्दयोः तीरशूरबोधने शक्तिः। न तावता लक्षणादिसिद्धिः। तीरशूरपदाध्याहारेणैव बोधोपपत्तेः। 'द्वारम्' इत्यत्र 'पिधेहि' इत्यध्याहारवत् इति चेन्न। निराकाङ्क्षत्वात्। 'द्वारम्' इत्यत्र

पिधेहीत्यध्याहार एव, न तु द्वारशब्दस्य पिधाने लक्षणा। 'द्वारम्' इत्येतावता निराकाङ्क्षबोधानुदयेन तदर्थमध्याहारस्यावश्यकत्वात्। प्रकृते तु 'गङ्गायां घोषः' इत्येतावता 'तीरे घोषः' इति निराकाङ्क्षबोधोदयेनाध्याहारस्यायोगात्। अध्याहारे गङ्गासिंहशब्दयोर्वैयर्थ्यप्रसङ्गश्च। 'द्वारम्' इत्यत्र पदाध्याहारे तु न कस्यापि वैयर्थ्यम्। इत्थं साकाङ्क्षत्वात् अवैयर्थ्याच्च 'द्वारम्' इत्यत्र 'पिधेहि' इति पदाध्याहार एव। निराकाङ्क्षत्वात् गङ्गासिंहशब्दवैयर्थ्याच्च 'गङ्गायां घोषः' इत्यादौ न तीरशूरपदाध्याहारः।

नन्वध्याहारासम्भवेऽपि अर्थापत्त्यैव तीरादिबोधोऽस्तु। किं शब्दवृत्तिसमाश्रयणेन? तथा हि- अनुपपद्यमानादर्थादुपपादककल्पना ह्यर्थापत्तिः। अर्थस्य= शब्दतोऽनुक्तस्य आपत्तिः= सिद्धिः(कल्पना) अर्थापत्तिरिति व्युत्पत्तेः[३०]। दिवाऽभुञ्जानत्वे सति पीनत्वं रात्रिभोजनमन्तरेण नोपपद्यते। अतः दिवाऽभ्युञ्जानत्वविशिष्ट-पीनत्वान्यथानुपपत्त्या अर्थापत्तिरेव रात्रिभोजनं निगमयति। तथा प्रकृतेऽपि। तथा हि - आप्तोक्तादेव 'गङ्गायां घोषः' इत्यादिशब्दात् मुख्यार्थेऽनुपपन्ने तीराद्यर्थः प्रतीयत इति वक्तव्यम्। न त्वनाप्तोक्तेनापि। अनुपपन्नग्राहके उन्मत्तवाक्यादावर्थप्रतीत्यभावात्। परन्तु वक्तुराप्तिः, प्रतीतार्थानुपपत्तिश्चेति द्वयं विरुद्धत्वात् नोपपद्यते। यथार्थवक्तुरेवाप्तत्वात्। अतोऽत्रोपपत्त्यर्थं तीरादिः कल्प्यते। इत्थं 'गङ्गायां घोषः' इत्यादौ अनुपपद्यमानादर्थान्तरकल्पनादर्थापत्तिरेव। इति चेत्- इदमप्ययुक्तम्। यतः- निश्चिते ह्याप्तत्वे प्रतीतार्थानुपपत्त्यार्थान्तरं कल्प्यते। गङ्गापदस्य तीरे वृत्त्यभावे असम्बद्धभाषिणि तस्मिन् आप्तत्वमेव कथं निश्चीयेत।

---

३०. शब्दार्थकौस्तुभः - चक्रवर्ति श्रीनिवासगोपालाचार्यविरचितः। ११६ पृष्ठे।

अतः लक्षणाद्यकल्पने 'गङ्गायां घोषः' 'सिंहो माणवकः' इति पदं प्रयुञ्जानस्याप्तत्वानिश्चयेनाप्तत्वपरिरक्षणार्थमेव तत्कल्पनमावश्यकम् ।

ननु शब्दस्यार्थे शक्तिर्नाम तज्ज्ञानजनकत्वम् । पूरज्ञानजनकत्वमेव 'गङ्गां पश्य' इत्यादौ गङ्गापदस्य पूरे शक्तिः । 'गङ्गायां घोषः' इत्यादौ तु गङ्गापदस्य तीरज्ञानजनकत्वात् शक्तिरेव तत्रास्तीति चेन्न । अत्र शक्तिशब्देन जनकत्वप्रयोजकस्य शब्दस्यार्थेन सह साक्षात्सम्बन्धस्याभिप्रेतत्वात् । 'नित्ययोगोऽपि शब्दानामर्थैर्नैव निषिध्यते'[३१] इत्यनुव्याख्यानेऽपि शब्दार्थयोस्तादृशः सम्बन्धोऽङ्गीकृतः । एतादृशश्चौत्पत्तिकः सम्बन्धः गङ्गाशब्देन पूरस्यैव वर्तते । न तु तीरस्येति शक्तिवृत्तिव्यतिरिक्ता लक्षणावृत्तिरवश्यमभ्युपगन्तव्या । सिंहशब्देन शूरप्रतीत्यर्थं गौणीवृत्तिरप्यावश्यकीति[३२] 'तिस्रः शब्दस्य वृत्तयः' इत्युक्तं युक्तमेवेति साधु संसाधितम् ।

### ६.५. लाक्षणिकमप्यानुभावकम् -

जरन्नैयायिकाः लाक्षणिकपदस्य स्वार्थानुभावकत्वं नाङ्गीकुर्वन्ति । 'गङ्गायां घोषः' इत्यत्र गङ्गापदं घोषपदार्थान्विततीररूपस्वार्थानुभावकं (तीरविषयकशाब्दबोधजनकं) न भवतीति तत्सिद्धान्तः । लक्षणिकपदस्याननुभावकत्वेऽपि तदर्थस्य शाब्दबोधस्तु समभिव्याहृतेन शक्तपदान्तरेण। शक्तिलक्षणान्यतरसम्बन्धेनेतरपदार्थान्वितस्व-शक्यार्थबोधं प्रति पदानां सामर्थ्यावधारणात् । 'गङ्गायां घोषः' इत्यत्र शक्तिलक्षणान्यतरसम्बन्धेन य इतरपदार्थो नाम गङ्गापदलक्ष्यं तीरम् तदन्वित-

---

३१. अ.व्या. (आनुमानिकाधिकरणम्)

३२. अत्र यद्वक्तव्यं तत् गौण्याः लक्षणातो भेदनिरूपणसन्दर्भे वक्ष्यते ।

स्वशक्यार्थबोधे घोषपदस्य सामर्थ्यात् घोषपदमेव तीरान्वितघोष-रूपस्वार्थानुभावकं भवति। एवं लाक्षणिकार्थस्य शाब्दबोधे समभि-व्याहृतं शक्तं पदान्तरमेव कारणम्। न पुनः कदापि लाक्षणिकपदस्यानु-भावकत्वम्। तच्छाब्दबोधे तच्छक्तपदज्ञानत्वेन हेतुत्वात्। इत्थञ्च शक्त-त्वस्यैवानुभावकत्वे तन्त्रत्वात् न लाक्षणिकं पदं शाब्दानुभवजनकम्। तथा च लाक्षणिके पदे स्मारिका शक्तिरेव; नानुभाविकीति भावः।

अत एव तन्मते 'कुमतिः पशुः' इत्यादि सर्वलाक्षणिकस्थले न शाब्दबोधः। अत्र हि वाक्ये पदद्वयमपि लाक्षणिकम्। कुत्सिता मतिः यस्य सः कुमतिरिति बहुव्रीहौ उत्तरपदस्य कुत्सितज्ञानवति लक्षणा। कुपदं तु निरर्थकं तात्पर्यग्राहकमात्रम्। एवमेव कुमतौ पशुत्वस्य बाधितत्वेन पशुपदस्यापि पशुसदृशे लाक्षणिकतया 'कुमतिः पशुः' इत्यत्र कस्यापि शक्तपदस्याभावात् कारणाभावे च कार्यासम्भवात् न तादृशस्थले शाब्दबोध इति तत्सिद्धान्तः। तदिदं सर्वमुक्तं मुक्तावल्याम्- 'किन्तु लाक्षणिकं पदं नानुभावकम्। लाक्षणिकार्थस्य शाब्दबोधे तु पदान्तरं कारणम्। शक्तिलक्षणान्यतरसम्बन्धेनेतरपदार्थान्वितस्वशक्यार्थ-शाब्दबोधं प्रति पदानां सामर्थ्याविधारणात्'[३३] इति।

रहस्यटीकायां मथुरानाथतर्कवगीशेन तु लाक्षणिकस्याननुभावकत्वे हेत्वन्तर-मुक्तम्- 'अन्वयानुभावकत्वं पदानामौत्सर्गिकम्। बाधकेन लक्षणास्थले त्यज्यते। तत्रान्वयप्रतियोगिस्मारकः पदार्थ एवेति पदस्य तत्स्मारकत्वाभावात् नानुभावकता'[३४] इति। तथा च लाक्षणिकं गङ्गादि-

३३. मुक्तावली, पृ.सं.५१६

३४. मथुरानाथतर्कवगीशकृत 'रहस्य'नामटीका। प.त.चिन्तामणिः, पृ.सं. ६१५

पदं नानुभावकम् । अन्वयप्रतियोगिन तीरस्य गङ्गापदादनुपस्थितेः । अन्वयप्रतियोगिनस्तीरस्य गङ्गापदादनुपस्थितेः । अन्वयप्रतियोग्युपस्थापकत्वेन पदानामन्वयानुभावकत्वात् इत्युक्तं भवति ।

एतन्मते लक्षणास्थले प्रथमं शक्यार्थस्मृतिः । ततः स्मृतशक्यान्वयानुपपत्तिज्ञानम् । ततः गङ्गापदात् पुनः शक्यस्मृतिः । ततः स्मृतशक्यादेव स्वसम्बन्धेन तीरस्मृतिः । इति क्रमः । अत्र शक्यार्थप्रवाहादिरेव तीरादिस्मारकः । परन्तु इदं प्राचीनमतं मणिकारेणैव निराकृतम् । 'गङ्गापदात् तीरस्यानुपस्थितौ तत्र सप्तम्यर्थान्वयानुपपत्तेः । विभक्तेः प्रकृत्युपनीतस्वार्थान्वयबोधकत्वव्युत्पत्तेः। प्रकृत्यर्थोपस्थाप्यस्य विभक्त्यर्थान्वये अतिप्रसङ्गोऽननुगमश्च'[३५] इत्यादिना ।

मणिमते तु गङ्गापदादेव स्वशक्यसम्बन्धेन तीरोपस्थितिः । न चैवमन्वयप्रतियोग्युपस्थापकतया इतरपदवल्लाक्षणिकमप्यनुभावकं, क्लृप्तात् इतरपदादेव तीरानुभवसम्भवेन लाक्षणिकस्याननुभावकत्वात् ।

शक्तस्यैवानुभावकत्वे तन्त्रत्वाच्च[३६] । 'न च सम्बन्धमात्रमनुभावकत्वे तन्त्रं लाघवादिति वाच्यम् । घटशब्दस्यापि कार्यकारणसम्बन्धेनाकाशानुभावकत्वापातात् । ननु तर्हि न सम्बन्धमात्रं तत्र तन्त्रं येनायमतिप्रसङ्गः स्यात् । किन्तु वृत्तिमात्रं तन्त्रमिति चेत्- तदपि न । वृत्तित्वं हि शाब्दानुकूलपदपदार्थसम्बन्धत्वम् । तथा चान्योन्याश्रयः स्फुट एव । शाब्दानुकूलत्वे

३५. प.त.चिन्तामणिः ६१७पृष्ठे ।

३६. स्वशक्यान्वयानुभवे पदानां सामर्थ्यावधारणात्

-प.त.चिन्तामणिः, पृ.सं. ६९७

ज्ञाते तद्घटितवृत्तित्वज्ञानम्। वृत्तित्वे च ज्ञाते तदवच्छेदेन शाब्दानुभवानुकूलत्वज्ञानमिति। अतो गत्यन्तराभावेन शक्तत्वमेवानुभावकत्वे तन्त्रम्। इत्थं वाचकमेवानुभावकम्; लाक्षणिकादिकन्तु स्मारकमेवेति मणिकारमतम्[३७]।

किन्तु तदिदं सर्वमाग्रहमात्रं मणिकारस्य; न विचारसहम्। तथा हि- वाक्यस्थं पदं न स्मारकमिति पूर्वमेव समर्थितत्वेन 'गङ्गायां घोषः' इत्यत्र गङ्गापदं न स्मारकमिति स्थितम्। तस्याननुभावकत्वमपि नास्तीत्यूरीकारे स्मृत्यनुभवान्यबोधाभावात् अबोधकत्वं प्रसज्येत।

किञ्चैवं सति लक्षणाया वृत्तित्वं भज्येत। लक्षणा हि 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति रीत्या पदार्थस्मारकमिति स्वीकृतम्। पदार्थस्मारकत्वञ्च सम्बन्धान्तरसाधारणम्। स्मारयति हि त्वन्मते घटादिशब्दः कार्यकारणभावसम्बन्धेनाकाशम्। न हि तावता कार्यकारणसम्बन्धस्य वृत्तित्वम्। यदि लक्षणाया अपि स्मारकत्वमात्रं तदा कार्यकारणसम्बन्धस्येवावृत्तित्वं प्रसज्येत। अनुभावकत्वाभ्युपगमे तु नायं दोषः। अवृत्तीनां कार्यकारणभावादीनां तदभावात्।

इत्थञ्चानुभावकत्वे शक्तिमात्रस्य हेतुत्वमूरीकृत्य लक्षणादेरनुभावकत्वातन्त्रत्वे लक्षणाया वृत्तित्वस्यैवापायप्रसङ्गात् वृत्तिमात्रं तत्र तन्त्रमिति वक्तव्यम्। वृत्तित्वञ्च साक्षाद्वा परम्परया वा शक्तिरूपसम्बन्धवत्वम्[३८]। परम्परासम्बन्धश्च शक्यार्थद्वारको लक्ष्यार्थद्वारको वा। घोष-

---

३७. मणिग्रन्थस्य तात्पर्यतोऽनुवादोऽयम्। ६९७तमादारभ्य ७००तमपृष्ठपर्यन्तम्।

३८. साक्षात्परम्परासाधारणशक्तिसम्बन्धित्वं वृत्तित्वमिति निरुक्तौ चान्योन्याश्रयाभावात्। -त.तां., पृ.सं. १७६

शब्दस्य घोषे साक्षाच्छक्तिसम्बन्धवत्त्वेन, गङ्गापदस्य तीरे शक्यार्थ-द्वारकशक्तिसम्बन्धस्य सत्त्वेन, द्विरेफशब्दस्य भ्रमरे तु लक्ष्यार्थद्वारक-शक्तिसम्बन्धस्य च सत्त्वेन सर्वत्र शक्तिलक्षणालक्षितलक्षणानां वृत्तित्वोपपत्तिः। एतेनैव न पूर्वोक्तान्योन्याश्रयोऽपि।

किञ्च लाक्षणिकस्याननुभावकत्वे 'गङ्गापदात् स्मराम्येव घोष-पदात्त्वनुभवाम्यपि' इति अनुव्यवसायश्च स्यात्। न हि कदाचित् कथञ्चिदपि कस्यचित्तादृशोऽनुव्यवसायो दृष्टः।

किञ्च घोषान्विततीरानुभवार्थं गङ्गापदेऽप्यनुभावकत्वमावश्यकम्। समभिव्याहृतेन शक्तपदेनेतरपदार्थान्वितस्वार्थबोधाङ्गीकारात्तीरान्वित-घोषबोधसम्भवेऽपि घोषान्विततीरबोधार्थं गङ्गापदेऽप्यनुभावकत्व-मावश्यकमेव।

एवं लाक्षणिकपदमप्यानुभावकमिति सयुक्ति निरूपितम्। न च तथात्वे बाधकं पश्यामः। अतोऽनुभावकमिति स्थितम्।

### ६.६. लाक्षणिकं पदं शक्यसम्बन्धित्वेनैव लक्ष्योपस्थापकम्-

'गङ्गायां घोषः' इत्यादौ लक्षणास्थले लक्षणया किं तीरत्वेन तीरोपस्थितिः? आहो गङ्गातीरत्वेन? न तावदाद्यस्याङ्गीकारो न्याय्यः। तथा सति 'गङ्गायां घोषः' इत्यत्र समुद्रतीराद्यन्वयोऽपि स्यादित्याक्षेपस्य कः प्रतीकारः? नापि द्वितीयः। युगपद्वृत्तिद्वयविरोधात्। गङ्गोपस्थितेः शक्तिसाध्यत्वेन तीरोपस्थितेस्तु लक्षणासाध्यत्वेन एकया वृत्त्या गङ्गातीरत्वेनोपस्थितेरजननात् युगपद्वृत्तिद्वयस्य च विरोधात्। अतः लाक्षणिकेन गङ्गापदेन तीरत्वमात्रेणैव तीरोपस्थितिरिति आद्यपक्षस्य

पुच्छ एवाश्रीयते । न चैवं तीरान्तरेऽन्वयोऽपि स्यादित्यतिप्रसङ्गः । वस्तुगत्या यद्गङ्गासम्बन्धितीरं तदेव तीरत्वेनोपस्थाप्यते इत्यङ्गीकारात् । इति मणिकारः ।

विश्वनाथेन तु- 'शक्यार्थसम्बन्धो यदि तीरत्वेन रूपेण गृहीतस्तदा तीरत्वेन तीरबोधः । यदि तु गङ्गातीरत्वेन गृहीतस्तदा तेनैव रूपेण स्मरणम्'[३९] इति वदता गङ्गातीर-त्वेनापि तीरबोधोऽभ्युपागामि । वृत्तिज्ञानपदार्थोपस्थितिशाब्दबोधानां समानप्रकारकत्वेन कार्यकारणभावः स्वीक्रियत इति तस्याभिप्रायः । यत्र तीरत्वेन वृत्तिज्ञानं तत्र तीरत्वेनैव पदार्थोपस्थितिः तेनैव रूपेण शाब्दबोधोऽपि । यत्र तु गङ्गातीरत्वेन तीरे वृत्तिर्गृहीता तत्र गङ्गातीरत्वेनैव पदार्थोपस्थितिः, तेनैव रूपेण च शाब्दबोध इति । अत एव तन्मते 'गङ्गायां घोषः' इत्यत्रत्या लक्षणा जहत्स्वार्था अजहत्स्वार्था चेति नरसिंहाकृतिं भजते । तत्रैषा व्यवस्था - यादृशलक्षणया शक्यार्थस्य कथञ्चिदपि न बोधस्तस्या एव जहत्स्वार्थत्वात् तीरत्वेन लक्षणायामेवेयं जहत्स्वार्था । गङ्गातीरत्वेन तीरभाने त्वजहत्स्वार्थैव लक्षणेति ।

अत्रैव केचन- लक्ष्यनिष्ठविषयत्वानिरूपितशक्यनिष्ठविषयत्वनिरूपकशाब्दबोधप्रयोजकलक्षणाया एव जहत्स्वार्थलक्षणापदार्थत्वात् प्रकृते शुद्धतीरत्वावच्छिन्नलक्षणायाः गङ्गातीरत्वावच्छिन्नलक्षणायाश्च तादृशशाब्दबोधप्रयोजकलक्षणात्वात् उभयोरपि जहत्स्वार्थतैवेत्याहुः । पुनरन्ये केचन नव्यतार्किकाः समभिव्याहृतपदार्थनिष्ठविषयतानिरूपितशक्यार्थनिष्ठविषयतानिरूपकशाब्दबोधप्रयोजकलक्षणात्वमेव जहत्स्वार्थत्वम् ।

३९. मुक्तावली, पृ.सं. ६९२

प्रकृते गङ्गातीरत्वावच्छिन्नलक्षणाज्ञानाधीनशाब्दबोधीयगङ्गानिष्ठ-विषयताया समभिव्याहृतसप्तमीपदार्थाधेयत्वविषयतानिरूपितत्वाभावेन गङ्गातीरत्वावच्छिन्नलक्षणाया अपि निरुक्तलक्षणाक्रान्ततया जहत्-स्वार्थतोपपत्तिरिति व्याचक्रुः[४०]।

वस्तुतस्तु शक्यसाधारणधर्मानवच्छिन्नविषयताप्रयोजकलक्षणात्वं शक्यसाधारणधर्मानवच्छिन्नलक्षणात्वं वा जहत्स्वार्थत्वमिति गङ्गातीर-त्वावच्छिन्नलक्षणायाः अपि ईदृशलक्षणाश्रयत्वेन जहत्स्वार्थत्वं निरा-बाधमेवेति प्रतिभाति[४१]।

प्रसङ्गादिदमुक्तम् । एतावत्तु निश्चप्रचम्- लाक्षणिकः गङ्गाशब्दः लक्षणया तीरत्वमात्रेण तीरं बोधयतीति सार्वत्रिकः नैयायिकः पन्थाः । क्वचन गङ्गातीरत्वेनापीति । मणिकारस्तु गङ्गातीरत्वेन (गङ्गासम्बन्धि-तीरत्वेन) तीरोपस्थापकता गङ्गाशब्दस्य न कथङ्कारमपि सम्भवतीत्याह- 'युगपद्वृत्तिद्वयविरोधात्, गङ्गासम्बन्धे गङ्गासम्बन्धाभावाच्च' इति । गङ्गायां (पूरे) शक्तस्य गङ्गापदस्य गङ्गासम्बन्धे शक्तेरभावेन शक्य-सम्बन्धरूपलक्षणाया एव वक्तव्यतया प्रकृते गङ्गासम्बन्धस्य (शक्य-सम्बन्धस्य) गङ्गासम्बन्धेऽभावात् न लक्षणयापि तदुपस्थापकत्व-सम्भवः । अतः वस्तुतो गङ्गासम्बन्धि यत्तीरं तदेव तीरत्वेन गङ्गाशब्दः उपस्थापयतीति ।

व्यासतीर्था अत्र पृच्छन्ति । 'गङ्गायां घोषः' इत्यत्र 'गङ्गायास्तीरे घोषः' इत्येवानुभवपदवीमारूढः बोधः, न तु यमुनातीरे समुद्रतीरे वा

४०. प्रभाव्याख्यानम्, मुक्तावली, पृ.सं. ५९२
४१. प्रभाव्याख्यानम्, मुक्तावली, पृ.सं. ५९२

घोष इति। अतः संविदि बहुमानवता पुरुषेण गङ्गासम्बन्धितीरत्वेनैव तीरं गङ्गाशब्दोपस्थाप्यमभ्युपेयम्। न च युगपद्वृत्तिद्वयविरोध इति वाच्यम्। विरोधस्यादृष्टत्वात्। कोऽयं विरोधः? एकत्रैकदैकेन प्रयुक्तः लाक्षणिकः शब्दः न शक्त्याप्यर्थं बोधयतीति? नैषोऽस्ति। प्रयुञ्जते हि व्यवहारपटवः प्रामाणिका अपि 'गङ्गायां घोषो मत्स्यश्च' इति। तीरं पूरश्च बोधयत्यत्रैकदा प्रयुक्तो गङ्गाशब्दो वृत्तिद्वयेन। 'तीरे घोषः' 'पूरे मत्स्यः' इत्यन्वयबोधात्। नन्वत्र गङ्गाशब्दस्तन्त्रेणावृत्त[४२] इति चेत्- अस्तु नाम। छत्रिणो यान्तीत्यत्र कथम्? छत्र्यच्छत्रिसमुदायबोधकः खल्वयं लाक्षणिकः शब्दः। छत्रिणस्तत्र शक्यार्थत्वेऽपि लक्षणाया एवाजहत्स्वार्थतां स्वीकृत्य लक्षणयैव समुदायबोधो यथाङ्गीकृतः, तद्वदत्रापि लक्षणयैव गङ्गासम्बन्धितीरोपस्थितिरित्यङ्गीकारसौकर्ये, किमित्यपलप्यते। अनुभवविरुद्ध एव वक्तव्य इति किं कुलदेवतासंमुखे शपथः कृतः? ननु नैव तथा। युक्तियुक्त एव वक्तव्य इति मच्छपथः। गङ्गासम्बन्धे शक्यसम्बन्धाभावात् कथमयमर्थः युक्त्या न विरुद्ध्यत इति चेत्- कथं विरुद्ध्यते? अस्त्येव खलु सम्बन्धः गङ्गायास्तीरेण संयोग इव संयोगाख्यस्य गङ्गासम्बन्धस्यापि गङ्गया साकं समवायाख्यः। गुणगुणिनोः समवायात्। अतस्त्यक्तव्यो दुराग्रहः। निमील्य नेत्रं मनसा चिन्तनीयम्। किं तीरं बुद्ध्यते उत गङ्गातीरम्? मा कार्षीरनुभवस्यापचारम्।

अनुभवश्च न तीरत्वमात्रेण। किन्तु गङ्गासम्बन्धितीरत्वेनान्यथा वक्त्रभिप्रेतस्य पावित्र्यादेरसिद्धेः। श्रोतुश्च गङ्गातीरे एव प्रवृत्त्यादेरनुपपत्तेश्च।

४२. सकृदुच्चरितस्य पदस्यावृत्त्या बहूपकारकत्वं तन्त्रम्। इति व्याख्यातारः।

ननु 'गङ्गायां घोषः' इति लक्षणास्थले गङ्गासम्बन्धः (लक्षणा) सन्निकर्षः। सन्निकर्षस्तु न कुत्रापि तज्जन्यज्ञाने भाति। चक्षुर्घटसंयोगादि-जन्ये घटादिज्ञाने संयोगाद्यविषयीकरणस्य दृष्टत्वात्। अतः सन्निकर्षस्य गङ्गासम्बन्धस्य चक्षुःसंयोगादिवत् न तज्जन्यधीविषयत्वम्। एवं वृत्तित्वाच्च शक्तिवत् नायमेतज्जन्यधीविषयः। शक्तिवृत्त्या जायमाने शाब्दबोधे हि शक्तिवृत्तिर्विषयो न भवति। तद्वदत्र गङ्गासम्बन्धरूपलक्षणावृत्त्या जायमाने तीरबोधे गङ्गासम्बन्धस्य (लक्षणायाः) विषयीकरणं न युज्यते। अत गङ्गासम्बन्धविशिष्टतीरबोधः अयुक्त इव भातीति चेन्न। सन्निकर्षवृत्त्योरपि तज्जन्यधीविषयत्वे दोषाभावात्। 'रूपी घटः' इत्यनेन हि 'रूपसमवेतो घटः' इति बोधः। अत्र रूपेण चक्षुषः संयुक्तसमवायः सन्निकर्षः। सन्निकर्षकोटिप्रविष्टः समवायोऽपि सन्निकर्ष एव। तस्यात्र तज्जन्यधीविषयत्वं दृष्टम्। समवायसम्बन्धाविषयीकरणे विशिष्टज्ञान-योगात्। न च सन्निकर्षैकदेशस्य भानेऽपि सन्निकर्षतापदर्याप्त्यधिकरणस्य न तज्जन्यधीविषयत्वमिति वाच्यम्। हेत्वभावेनाप्रयोजकत्वात्।

किञ्च गौणीस्थले वृत्तिरूपस्यापि सादृश्यस्य तज्जन्यधीविषयत्वं दृष्टम्। 'सिंहो देवदत्तः' इत्यनेन सिंहसादृश्यबोधात्। शक्तौ नोपलब्धेयं रीतिः, शक्ताविव खलु लक्षणायामप्यङ्गीकरणीयम्- इति चेन्न। अशक्य-त्वेनामुख्यवृत्तिभूतायां लक्षणायामशक्यत्वेन सजातीयगौणीरीतेरेवो-चितत्वात्। विजातीयाभिधारीतेरेवानुचितत्वात्। अतः गौणीस्थले यथा वृत्तेरपि सादृश्यस्य प्रतीतिः तथा लक्षणायां शक्यसम्बन्धस्य प्रतीतिरिति 'गङ्गायां घोषः' इत्यत्र गङ्गासम्बन्धविशिष्टघोष एव बुध्यते।

अङ्गीकृत्य चेदमुदितम्। वस्तुतः सम्बन्धो न वृत्तिः। किन्तु वृत्तिहेतु-रेवेति पूर्वमेव सिद्धान्तितम्[४३]। वृत्तिहेतुश्च शाब्दधीविषयो भवत्येव। घटादिशब्देषु वृत्तिहेतूनां घटत्वादीनां शाब्दबुद्धिविषयत्वस्योपलब्ध-त्वात्।

इदमत्र चिन्तनीयम्- 'गङ्गायां घोषः' इत्युक्ते हि तीरे गङ्गासम्बन्धः, संस्थानविशेषोऽतिपूतत्वादिश्च भासत इत्यत्र नास्ति विप्रतिपत्तिः। तीरमात्रे लक्षणावृत्तिस्वीकारे वृत्त्यविषयानां तदेतेषां शाब्दबुद्धिविषयता दुर्घटा भवतीत्यपि नातितिरोहितं समेषाम्। अतः न केवलं शक्यसाक्षात्-सम्बन्धो लक्षणावृत्तिः। किन्तु लक्षकपदेन यावतामर्थानामवभासः तावत्पर्यन्तः परम्परासम्बन्धो लक्षणावृत्तिरिति स्वीकर्तव्यम्। अत एव लक्षितलक्षणापि लक्षणैव। अन्यथा सा पृथग्वृत्तिः स्यात्।

'प्राग्विरुद्धा राजान इदानीमेकीभूताः' इत्यादिर्लक्षितलक्षणा। द्विरेफपदस्य भ्रमरवाचकतापि लक्षितलक्षणयैव। प्रतीतिपर्यन्तपरम्परा-सम्बन्धस्य लक्षणावृत्तित्वात् लक्षितलक्षणाया अपि तत्रैवान्तर्भावः न पुनर्लेखनीव्यापारमपेक्षते। 'रूपसमवायी घटः' इत्यत्र हि रूप-घट-समवाया इति त्रयो भासन्ते। तत्र घटे चक्षुरादिसंयोगः सन्निकर्षः। रूपे तु संयुक्तसमवायः। समवाये पुनः संयुक्तसमवेतविशेषणतासन्निकर्षः। तदेषा सर्वा प्रक्रिया समाना 'गङ्गायां घोषः' इत्यत्रापि। अत्रापि हि तीरेण सह प्रवाहस्य सम्बन्धः (संयोगः) एव वृत्तिः। संयोगरूपप्रवाह-तीरसम्बन्धेन साकं तु प्रवाहसम्बन्धसम्बन्ध(समवायः) एव वृत्तिः। न चैवं सम्बन्धसम्बन्धेनापि शब्दस्य सम्बन्धसम्बन्धसम्बन्धो वृत्तिरिति,

४३. वृत्तिलक्षणोक्तिप्रस्तावे अत्रैव।

तत्राप्येवमित्यवनवस्थेति वाच्यम् । तीरसम्बन्धस्येव सम्बन्धसम्बन्धस्याप्रतीत्या तस्य स्वरूपसत एव वृत्तित्वाभ्युपगमात् । न हि 'रूपसमवायी घटः' इत्यत्र समवायसम्बन्धोऽपि सम्बन्धान्तरेण सम्बद्धो भासते ।

तस्मात् गङ्गाशब्दः गङ्गातीरत्वेनैव तीरोपस्थापक इति सिद्धान्तः ।

यद्यप्यत्र शक्यसम्बन्धो वृत्तिहेतुस्तथापि तस्य शाब्दधीविषयत्वमनुभवबलेनाङ्गीक्रियते ।

अत एव-

स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि ।
सादृश्ये चैक्यवाक्सम्यक् सावकाशा यथेष्टतः[४४] ॥

इत्यनुव्याख्याने स्वातन्त्र्यस्थानैक्यादिलक्षणानिमित्तस्य सादृश्याख्यगौणीनिमित्तस्य चाभेदश्रुत्यर्थतोक्ता । उदाहृतस्यास्य श्लोकस्य चायं सन्दर्भः- द्वा सुपर्णा सयुजा सखाया' इत्यादयो द्वैतबोधिका श्रुतयः सन्ति । दृश्यन्ते पुनः 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इत्यादयोऽद्वैतबोधिकाः अपि श्रुतयः । तत्कथमत्र बाध्यबाधकभावः? इति प्राप्ते सर्वा अप्यद्वैतश्रुतयः द्वा सुपर्णेत्यादिद्वैतश्रुतिविरुद्धत्वात् प्रतीतार्थे प्रामाण्यं न भजन्त इति निर्णीयते । ननु अधिकबलविरोधेन हीनबलमप्रमाणं भवति । भेदश्रुतीनां च कथमद्वैतश्रुतिभ्योऽधिकबलवत्त्वं येन तद्बाधकतोच्यत इत्याक्षेपे सतीदमुक्तम्- स्वातन्त्र्ये चेत्यादि ॥ स्वातन्त्र्ये इत्यादिका निमित्तसप्तमी । चर्मणि द्वीपिनं हन्तीत्यादिवत् । स्थानमत्यैक्ययोरित्यत्र द्वन्द्वान्ते श्रूयमाणमैक्यपदं प्रत्येकमभिसम्बध्यते । तथा च सर्वेष्वे-

---

४४. अ.व्या. (३८श्लोक)

तेष्वैक्यवाक्येषु यदिदमैक्यमुच्यते तत् स्वातन्त्र्यसादृश्यादिनिमित्तम्। न तु मुख्यवृत्त्या अभेद एव तत्रोच्यते इत्येवं क्रमेणैक्यवाक्यस्य सावकाशत्वात् 'अवकाशोज्झिता भेदश्रुतिर्नातिबला कथम्?' इति निरवकाशभेदश्रुतेः प्राबल्यमत्र समर्थ्यते।

सम्यक्सावकाशा इति वदन् स्वातन्त्र्यादिनिमित्तकः ऐक्यव्यवहारः प्रतिदिनं श्रूयमाणः प्रसिद्ध एवेति सूचयति। तेन न ह्यस्मदायत्ते शब्दप्रयोगे अकस्मादमुख्यं प्रयुञ्महे। अतः अमुख्यप्रयोगे किमपि प्रयोजनं वक्तव्यमिति निरस्तम्। स्वातन्त्र्यादिनिमित्तामुख्यव्यवहारस्य रूढत्वात्। रूढयोर्लक्षणागौण्योः प्रयोजनानपेक्षणात्।

ऐक्यवाक्यस्य भेदाविरोधिनी पञ्चविधा गतिरत्र प्रदर्शिता। स्वातन्त्र्यनिमित्तम्, विशिष्टत्वनिमित्तम्, स्थानैक्यनिमित्तम्, मत्यैक्यनिमित्तम्, सादृश्यनिमित्तं वा ऐक्यश्रुतेः प्रवृत्तिरिति।

एतान्यत्रोदाहरणानि- वशीकृतग्रामं पुरुषमधिकृत्य 'अयं ग्रामोऽयमेव' इति, 'इन्दिरा एव इण्डिया (भारतम्)' इति वा स्वातन्त्र्ये अभेदव्यवहारः। विद्याविशिष्टं ब्राह्मणमधिकृत्य 'अयमेव ब्राह्मणोऽस्मिन् ग्रामे' इति 'अस्मिन् ग्रामे ब्राह्मणाः सर्वेऽयमेव' इति वा ब्राह्मणान्तरे विद्यमानेऽपि वैशिष्ट्यनिमित्तमभेदव्यवहारः। 'सायं गोष्ठे गाव एकीभूताः' इति 'समुद्रे नद्यः एकीभवन्ति' इति वा स्थानैक्यनिमित्तमभेदव्यवहारः। 'पूर्वं परस्परविरुद्धा ब्राह्मणा इदानीमेकीभूताः' इति 'देवा दैत्याश्च विरुद्धा अपि समुद्रमथने एकीभूताः' इति वा मत्यैक्यनिमित्तमैक्यव्यवहारः। 'अग्निर्माणवकः' इति, भित्तिलिखिते सिंहे 'अयमेव सिंहः' इति वा सादृश्यनिमित्तमभेदव्यवहारः।

एवमेवैक्यश्रुतीनामपि गतिश्चिन्तनीया । तत्त्वमसीत्यादिप्रयोगः सादृश्यनिमित्तको गौणः । अत एव तत्सदृशोऽयमित्यर्थे न भेदविरोधी। 'नान्योतोऽस्ति द्रष्टा' 'सर्वं खल्विदं ब्रह्म' इत्यादिकस्तु निर्देशः स्वातन्त्र्यवैशिष्ट्यादिनिमित्तो लाक्षणिकः। 'परेऽव्यये सर्व एकीभवन्ति' इत्यादिव्यपदेशस्तु स्थानैक्येन मत्यैक्येन वा लाक्षणिक इत्यादि ज्ञेयम्।

यद्यप्यद्वैतवेदान्तेऽपि 'तत्त्वमसि' इति वाक्यस्य लाक्षणिकत्वमङ्गीकृतम्। किन्तु 'सिंहो देवदत्तः' इत्यादिवद्गौणोऽयं व्यपदेश इत्यङ्गीकार एवोचितः । अद्वैतवादिभिः खलु तत्त्वपदयोर्विरुद्धस्वार्थैकदेशत्यागेनैकदेशलक्षणया (जहदजहल्लक्षणाया) विशेष्यविशेषणयोः समानविभक्तिकत्वरूपं सामानाधिकरण्यमात्रं मुख्यमङ्गीकृतम् । ततो वरं पदद्वयस्य मुख्यार्थत्वमेवाङ्गीकृत्य सामानाधिकरण्यमात्रस्य गौणत्वमङ्गीकर्तुमिति परामृष्टव्यम् ।

इत्थं सादृश्यस्थले गौणीवृत्तिः। स्थानैक्यस्थले लक्षणा। मत्यैक्यस्थले तु लक्षितलक्षणा । तदुक्तं सुधायाम्- 'तत्र स्थानैक्येनैक्यव्यपदेशो लाक्षणिकः । स्थानगतस्यैक्यस्य स्थानिषु प्रयोगात् । ऐकमत्यनिमित्ते तु प्रयोगे लक्षितलक्षणा। विषयैक्यात् मत्यैक्यं, ततश्च मतिमतामिति'[४५] इति । तदित्थम्- परेऽव्यये सर्व एकीभवन्तीत्यत्रानेके एके सम्पद्यमाना भवन्तीति खल्वेकीभवन्तीत्यस्यार्थः । अभूततद्भावार्थकच्विप्रत्ययश्रवणात् । ततश्चात्र यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदस्य प्रवाहरूपमुख्यार्थेन नार्थवत्त्वम्, तथा सति प्रवाहस्य घोषानाधारत्वेन बाधितार्थत्वप्रसङ्गात्, तथा प्रकृते एकशब्दस्य एकत्वविशिष्टरूपमुख्यार्थेन

४५. न्या.सु., पृ.सं. ४२३८

न अर्थवत्त्वं सम्भवति । मुक्तेः पूर्वमिवानन्तरमपि एकत्वविशिष्टत्व-सम्पत्त्यभावेन अनेके एके सम्पद्यन्त इत्यभूततद्भावार्थकच्विप्रत्ययार्थस्य बाधितत्वात् । किन्तु यथा तत्र गङ्गापदस्य पूरसम्बन्धितीरलक्ष्यार्थे-नार्थवत्त्वम्, तीरस्य घोषाधिकरणत्वसम्भवेन बाधाभावात् ; तथा एकशब्दस्यापि मुख्यार्थभूतैकत्वविशिष्टं यत् स्थानं तत्सम्बन्धिरूप-लक्ष्यार्थेनार्थवत्त्वम् । मुक्तेः प्राक् इतस्ततः स्थितानां तेषां मुक्त्यनन्तरं भगवद्व्यक्तिस्थाननिवाससद्भावेन अनेके एके सम्पद्यन्त इत्यभूत-तद्भावार्थकच्विप्रत्ययस्याबाधात् । यदा त्वैकमत्यनिमित्तमेकीभवन्तीति प्रयोगस्तदा लक्षितलक्षणा । मुख्यार्थानुपपत्त्या तत्सम्बन्ध्यर्थान्तरस्येव लक्ष्यार्थस्याप्यनुपपत्त्या तत्सम्बन्ध्यर्थान्तरस्य लक्ष्यमाणत्वे लक्षित-लक्षणा । प्रकृते एकशब्दस्य एकत्वविशिष्टं वस्तु मुख्यार्थः । तस्य च मुख्यार्थस्यानुपपत्त्या तत्सम्बन्धी मतिरूपोऽर्थो लक्ष्यत इति स लक्ष्यार्थः । ततो लक्ष्यार्थस्याप्यनुपपत्त्या तत्सम्बन्धी तद्वान् पुरुषः एकशब्देन लक्ष्यते ।

अयं भावः- यथा ह्यत्रैकशब्दो मुख्यार्थेन नार्थवान् पूर्वमनेकेषां मुक्त्यनन्तरमपि ऐक्यसम्पत्त्यभावेनाभूततद्भावरूपच्विप्रत्ययार्थबाधात्, तथा मुख्यार्थसम्बन्धिना मतिरूपलक्ष्यार्थेनापि नार्थवान् । मुक्त्यनन्तरमपि तेषां मुक्तानां याः मतयः तासां एकविषयमतित्वसम्पत्त्यभावेनाभूत-तद्भावरूपच्विप्रत्ययार्थबाधतादवस्थ्यात् । किन्तु लक्ष्यार्थभूतमतिसम्बन्धी मतिमद्रूपो योऽर्थः तेनैव सोऽर्थवान् । मुक्तेः पूर्वं भगवता भिन्नविषयमति-मतां तेषां मुक्त्यनन्तरं भगवता समानविषयमतिमत्त्वसम्पत्तिसद्भा-वेनाभूततद्भावार्थकच्विप्रत्ययस्वारस्यात् । अतोऽत्र लक्षितलक्षणा ।

यद्यप्यत्रैकशब्देन मतिमन्मात्रलक्षणयापि च्विप्रत्ययोक्ताभूततद्भावार्थलाभात् न लक्षणाद्वयस्य प्रयोजनं किञ्चिदुत्पश्यामः । तथाप्येकपदमुख्यार्थस्य मतिमद्भिः मत्यद्वारकसम्बन्धानिरूपणादन्तरङ्गसम्बन्धलिप्सया लक्षणाद्वयमाश्रयणीयमिति द्रष्टव्यम्[४६] ।

एवं लक्षकस्य शक्यसम्बन्धित्वेनैवोपस्थापकत्वकथनेन 'अखण्डे ब्रह्मणि वेदान्तानां लक्षणा' इति वेदान्तिमतमपास्तं भवति । उक्तञ्चेदम् ईक्षत्यधिकरणे-

अमेयं चेन्न शास्त्रस्य तत्र वृत्तिः कथञ्चन । इति[४७] 'सर्वशब्दावाच्यस्य लक्षणाऽयुक्तेः'[४८] इति च ब्रह्मसूत्रभाष्ये । एवमनुभावकं लाक्षणिकं शक्यसम्बन्धित्वेनैव लक्ष्योपस्थापकमिति समर्थितम् ।

इदमत्रावधेयम्- व्यञ्जनाया अतिरिक्तवृत्तित्वं ये स्वीकुर्वन्ति आलङ्कारिकादयस्तेषां ये व्यञ्जनावृत्तिविषयाः शैत्यपावनत्वादयस्ते सर्वेऽपि लक्षणावृत्तिबोध्या इति द्वैत-सिद्धान्तः । इति । अत्र यद्यपि व्यञ्जनायाः अतिरिक्तवृत्तित्वं नास्तीति विषये बहु वक्तव्यमस्ति । किन्त्वयं विचारः 'व्यञ्जनावृत्तिविमर्शः' इति शीर्षिकायाः अधः अन्य एव महान् प्रबन्धो भवितुमर्हतीति प्रकृते विस्तरभिया विरम्यते ।

अन्ये केचन व्यञ्जनाया इव गौण्या अपि लक्षणातो भेदं नोत्पश्यामः। अत इयमपि लक्षणायामेवान्तर्भवतीति 'वृत्तिश्च शक्तिलक्षणान्यतरसम्बन्धः'[४९] इति व्याहरन्ति । तत्रेदं किञ्चिद्विलिख्यते ।

---

४६. (शेषवाक्यार्थचन्द्रिकाटिप्पणी) न्या.सु., पृ.सं. ४१३८

४७. अ.व्या. ईक्षत्यधिकरणे १४४ तमः श्लोकः ।

४८. ब्र.सू.भाष्यम्, ईक्षत्यधिकरणे ।

४९. मुक्तावली, पृ.सं. ५४७

**६.७. गौण्याः लक्षणातो भेदप्रकारः -**

शक्तिर्लक्षणा चेति द्वयी शब्दवृत्तिः । गौण्यादीनां लक्षणाया-मेवान्तर्भावात् नास्त्येव गौणी नाम काचनवृत्तिरिति नैयायिकादयः । तेषामयं वादः- गङ्गावाचकस्य गङ्गाशब्दस्य तीरे वृत्तिर्लक्षणेत्युच्यते । सिंहवाचकस्य सिंहशब्दस्य माणवके वृत्तिरेव गौणीत्युच्यते । कोऽनयोः भेदः? अन्यवाचकस्य शब्दस्यान्यत्र वृत्तित्वं समानम् । अत एवाविशेषात् नानयोर्भेदः ।

ननु सम्बन्धमात्रेण लक्षणा, सादृश्येन तु गौणीति सम्बन्धसादृश्य-रूपनिमित्तभेदाद्भेद इति चेन्न । सादृश्यस्यापि सम्बन्धत्वात् । संयोग-समवायादिरूपत्वाभावात्कथमिति चेत्- किं संयोगसमवायावेव सम्बन्धौ? अङ्गीकृतं खलु कालिकादीनामपि सम्बन्धत्वम् । विशिष्टधीनियामक-मात्रस्य सम्बन्धत्वात् । 'घटविशिष्टं भूतलम्' इत्यत्र सः संयोगः, 'रूपविशिष्टो घटः' इत्यत्र तु सः समवायः, 'घटाभावविशिष्टं भूतलम्' इत्यत्र तु सः स्वरूपसम्बन्धः । एवं 'अस्मिन् काले वर्तते' इत्यत्र काल-वैशिष्ट्यधीनिर्वाहकः कालिकविशेषणताख्यः स्वरूपसम्बन्धविशेषः । एवमेव 'देवदत्तः सिंहेन सदृशः' इत्यत्र सादृश्यस्यैव विशिष्टधीनिर्वाहकत्वात् सम्बन्धत्वम् । इत्थञ्च सादृश्यस्यापि सम्बन्धत्वात् लक्षणागौण्योर्न निमित्तभेदोऽपि । अतः लक्षणाव्यतिरिक्ता नास्त्येव काचन गौणीवृत्तिः इति ।

यद्यपि संयोगसमवायाभ्यां 'दण्डी' 'रूपवान्' इतिवत् सादृश्येन 'सिंहवान् देवदत्तः' इति विशिष्टधियोऽभावात् विशिष्टधीनियामकत्वा-भावतः सादृश्यस्य कथं सम्बन्धत्वमिति भवति जिज्ञासा । तथापि

व्यतिरेकलक्षणास्थले इव विशिष्टबुध्यनियामकस्यापि शक्यसम्बन्धत्वाङ्गीकारात् न दोषः[५०] । इति तेषामाशयः ।

मम्मटेन तु गौणी लक्षणायामन्तर्भाविता[५१] । '''गौर्बाहीकः' 'गौरयम्' इत्यादौ साधारणगुणाश्रयणेन परार्थ एव लक्ष्यत इत्यपरे''[५२] इति वदता काव्यप्रकाशिकाकृता तन्त्रदीपिकावाक्यं संवादितया प्रदर्शितम् -

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता ॥ इति[५३] ।

अयमाशयः- 'सिंहो देवदत्तः' इत्यत्र सिंहशब्देन लक्ष्यमाणसिंहनिष्ठगुणानां माणवके सिंहशब्दवृत्तौ निमित्तत्वं न युज्यते । अन्यनिष्ठगुणानामन्यत्र शब्दवृत्तौ निमित्तत्वेऽतिप्रसङ्गात् । अतः सिंहनिष्ठगुणसदृशाः क्रौर्यादयो माणवकनिष्ठाः लक्षणीयाः । तैश्च लक्षितैः गुणैः गुणी माणवको लक्ष्यत इति लक्षितलक्षणैवैषा । न तु शुद्धलक्षणा । लक्षणागौण्येरेतावानेव भेद इति ।

किन्त्वयं वादोऽनुभवाननुसारित्वात् त्याज्यः । न हि केनापि 'सिंहो देवदत्तः' इत्युक्ते सिंहगुणसादृश्याद्गुणान्तरस्य लक्षणा, ततो गुणिनो लक्षणेत्यनुभूयते । किञ्च गुणान्तरलक्षणार्थं मुख्यार्थनिष्ठगुणसादृश्यस्य त्वयाप्यभ्युपगमात्, आवश्यकत्वात् लाघवाच्च सिंहेन सह माणवके यत्सादृश्यं तदेव निमित्तं युक्तम्[५४] ।

---

५०. का.प्र.टिप्पणी- १०५पृष्ठ ।

५१. गौण्यपि लक्षणाविशेष इति तात्पर्यम् । -का.प्र.व्याख्या मधुमती, पृ.सं. १०८

५२. का.प्र., पृ.सं. १०७

५३. तन्त्रवार्तिके १.४.२२.

५४. त.तां., पृ.सं. १९१

अन्ये केचन सादृश्यस्य सम्बन्धविशेषत्वेऽपि यत्र सम्बन्धत्वेन हेतुता सा लक्षणा ; यत्र तु सादृश्यत्वेन हेतुता सा गौणीति भेदमाहुः । तदपि न। तथा सति 'गङ्गायां घोषः' इत्यत्रापि यत्र संयोगस्य (शक्यसम्बन्धस्य) सम्बन्धत्वेन हेतुता तत्र लक्षणा; संयोगत्वेन हेतुत्वे तु गौणीति प्रसज्येत । सादृश्यस्य सम्बन्धत्वं नास्तीति प्रतिपाद-यिष्यमाणत्वाच्च नायमुचितो वादः ।

परे त्वेवमाहुः- यत्रोपस्थापकस्यापि वाक्यार्थेऽन्वयः सा गौणी । 'सिंहो देवदत्तः' इत्यनेन 'सिंहसदृशः' इति बोधे उपस्थापकस्य सादृश्यस्यापि प्रतीतेः । यत्र तु न तस्य बोधः सा लक्षणा । 'गङ्गायां घोषः' इत्यादौ सम्बन्धाप्रतीतेरिति । तदेतदप्यपरीक्ष्योक्तमेव । गङ्गायां घोषः इत्यादिलक्षणास्थलेऽपि गङ्गासम्बन्धविशिष्टस्यैव तीरादेः प्रतीतिरित्युपपादितत्वात्[५५] ।

इतरे त्वाहुः- सामानाधिकरण्ये गौणी। 'सिंहो देवदत्तः' इत्यादवेकविभक्तित्वेन सामानाधिकरण्यात् । वैयधिकरण्ये तु लक्षणा । 'गङ्गायां घोषः' इत्यादौ भिन्नविभक्तिकत्वेन वैयधिकरण्यात् । इति । तदेतदप्यसारम् । दृश्यते हि 'माणवकस्याध्ययनम्' इत्यर्थे माणवके पावित्र्यादिसूचनायाग्निसादृश्यं वक्तुम् 'अग्नेरध्ययनम्' इत्यादिवाक्यप्रयोगः । दृष्टः पुनः 'गङ्गायां घोषः' इति स्थाने 'गङ्गा घोषवती' इति सामानाधिकरण्येनापि प्रयोगः । अतो न सामानाधिकरण्यवैयधिकरण्याभ्यामपि भेदः ।

---

५५. शक्यसम्बन्धित्वेनैव लक्ष्यार्थप्रतीतिरित्युपपादनावसरे अत्रैव ।

व्यतिरेकलक्षणास्थले इव विशिष्टबुध्यनियामकस्यापि शक्यसम्बन्धत्वाङ्गीकारात् न दोषः[५०]। इति तेषामाशयः।

मम्मटेन तु गौणी लक्षणायामन्तर्भाविता[५१]। "'गौर्बाहीकः' 'गौरयम्' इत्यादौ साधारणगुणाश्रयणेन परार्थ एव लक्ष्यत इत्यपरे"[५२] इति वदता काव्यप्रकाशिकाकृता तन्त्रदीपिकावाक्यं संवादितया प्रदर्शितम् -

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।
लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता॥ इति[५३]।

अयमाशयः- 'सिंहो देवदत्तः' इत्यत्र सिंहशब्देन लक्ष्यमाणसिंहनिष्ठगुणानां माणवके सिंहशब्दवृत्तौ निमित्तत्वं न युज्यते। अन्यनिष्ठगुणानामन्यत्र शब्दवृत्तौ निमित्तत्वेऽतिप्रसङ्गात्। अतः सिंहनिष्ठगुणसदृशाः क्रौर्यादयो माणवकनिष्ठाः लक्षणीयाः। तैश्च लक्षितैः गुणैः गुणी माणवको लक्ष्यत इति लक्षितलक्षणैवैषा। न तु शुद्धलक्षणा। लक्षणागौण्येरेतावानेव भेद इति।

किन्त्वयं वादोऽनुभवाननुसारित्वात् त्याज्यः। न हि केनापि 'सिंहो देवदत्तः' इत्युक्ते सिंहगुणसादृश्याद्गुणान्तरस्य लक्षणा, ततो गुणिनो लक्षणेत्यनुभूयते। किञ्च गुणान्तरलक्षणार्थं मुख्यार्थनिष्ठगुणसादृश्यस्य त्वयाप्यभ्युपगमात्, आवश्यकत्वात् लाघवाच्च सिंहेन सह माणवके यत्सादृश्यं तदेव निमित्तं युक्तम्[५४]।

---

५०. का.प्र.टिप्पणी- १०५पृष्ठे।
५१. गौण्यपि लक्षणाविशेष इति तात्पर्यम्। -का.प्र.व्याख्या मधुमती, पृ.सं. १०८
५२. का.प्र., पृ.सं. १०७ ५३. तन्त्रवार्तिके १.४.२२.
५४. त.तां., पृ.सं. १९१

अन्ये केचन सादृश्यस्य सम्बन्धविशेषत्वेऽपि यत्र सम्बन्धत्वेन हेतुता सा लक्षणा ; यत्र तु सादृश्यत्वेन हेतुता सा गौणीति भेदमाहुः । तदपि न। तथा सति 'गङ्गायां घोषः' इत्यत्रापि यत्र संयोगस्य (शक्यसम्बन्धस्य) सम्बन्धत्वेन हेतुता तत्र लक्षणा; संयोगत्वेन हेतुत्वे तु गौणीति प्रसज्येत । सादृश्यस्य सम्बन्धत्वं नास्तीति प्रतिपाद-यिष्यमाणत्वाच्च नायमुचितो वादः ।

परे त्वेवमाहुः- यत्रोपस्थापकस्यापि वाक्यार्थेऽन्वयः सा गौणी । 'सिंहो देवदत्तः' इत्यनेन 'सिंहसदृशः' इति बोधे उपस्थापकस्य सादृश्यस्यापि प्रतीतेः । यत्र तु न तस्य बोधः सा लक्षणा । 'गङ्गायां घोषः' इत्यादौ सम्बन्धाप्रतीतेरिति । तदेतदप्यपरीक्ष्योक्तमेव । गङ्गायां घोषः इत्यादिलक्षणास्थलेऽपि गङ्गासम्बन्धविशिष्टस्यैव तीरादेः प्रतीतिरित्युपपादितत्वात्[५५] ।

इतरे त्वाहुः- सामानाधिकरण्ये गौणी। 'सिंहो देवदत्तः' इत्यादवेकविभक्तित्वेन सामानाधिकरण्यात् । वैयधिकरण्ये तु लक्षणा । 'गङ्गायां घोषः' इत्यादौ भिन्नविभक्तिकत्वेन वैयधिकरण्यात् । इति । तदेतदप्यसारम् । दृश्यते हि 'माणवकस्याध्ययनम्' इत्यर्थे माणवके पावित्र्यादिसूचनायाग्निसादृश्यं वक्तुम् 'अग्नेरध्ययनम्' इत्यादिवाक्यप्रयोगः । दृष्टः पुनः 'गङ्गायां घोषः' इति स्थाने 'गङ्गा घोषवती' इति सामानाधिकरण्येनापि प्रयोगः । अतो न सामानाधिकरण्यवैयधिकरण्याभ्यामपि भेदः ।

---

५५. शक्यसम्बन्धित्वेनैव लक्ष्यार्थप्रतीतिरित्युपपादनावसरे अत्रैव ।

इत्थञ्च गौणीलक्षणयोर्भेदस्य कथमपि वक्तुमशक्यत्वात् 'इदमनेन सदृशम्' इति विशिष्टधीजनकस्य सादृश्यस्य सम्बन्धत्वाच्च नास्त्येव गौणीलक्षणयोर्भेद इति चेत्-

मैवम् । सति हि सादृश्यस्य सम्बन्धत्वे नास्ति गौणीलक्षणयोर्भेद इति पूर्वपक्षस्यावसरः । तदेव नास्ति !!

## ६.८. सादृश्यस्य सम्बन्धत्वनिराकरणम् -

'इदमनेन सदृशम्' इति विशिष्टबुध्या सादृश्यस्य सम्बन्धता नैव सिद्धयति । यथा हि 'इदमनेन संयुक्तम्' 'कपिः वृक्षेण संयुक्तः' इत्यादिप्रतीत्या संयोगः विशेष्यविशेषणयोः सम्बन्धतया न सिद्धयति, 'दण्डी' इत्यत्र दण्डवत्संयोगस्यैवात्र विशेषणत्वात्, किन्तु 'दण्डी देवदत्तः' इत्यत्र विशेषणविशेष्ययोः दण्डदेवदत्तयोः संयोगवत् प्रकृते विशेष्यविशेषणयोः संयोगिसंयोगयोः समवाय एव सिद्धयति; तथा 'इदमनेन सदृशम्' इति प्रतीत्या सादृश्यस्य विशेषणत्वात् धर्मिणा इदमर्थेन सह सादृश्यस्यान्यः कश्चन सम्बन्धः सिद्धयेच्चेदपि सादृश्यस्य सम्बन्धत्वे किमायातम् ।

किञ्च सम्बन्धान्तरं विना संयोगेनैव 'दण्डी देवदत्तः' इति विशिष्टधी-जननात्, समवायेन च 'रूपी घटः' इति विशिष्टधीजननात्, स्वरूप-सम्बन्धेन च 'ज्ञातो घटः' 'घटाभाववद्भूतलम्' इत्यादिविशिष्टधीजननात् यथाक्रमं संयोगसमवायस्वरूपाणां सम्बन्धत्वं सिद्धयति । तथा 'सिंहो देवदत्तः' इत्यत्र सादृश्येनैव 'सिंहवान् देवदत्तः' (सिंही देवदत्तः) इति यदा धीः स्यात् तदा सादृश्यस्य सम्बन्धत्वं सिद्धयेदपि । नास्त्येव सा ।

अस्ति चेदपि 'गोमान् देवदत्तः' इतिवत् सिंहवानिति धीः न सादृश्यनिमित्तिका। स्वस्वामिभावादिसम्बन्धनिमित्तिकैव सा।

इत्थञ्च न सम्बन्धत्वं सादृश्यस्येति भिन्ननिमित्तत्वात् लक्षणा-गौण्योर्भेदः सिद्धः।

ननु शक्यसम्बन्धिसादृश्यस्यैव गौणीनिमित्तत्वं वाच्यम्। न पुनः सादृश्यमात्रस्य। तथा सति यत्किञ्चित्सादृश्यस्य सर्वत्र सम्भवात् सर्वस्य शब्दस्य गौण्या सर्वार्थप्रत्यायकत्वप्रसङ्गात्। शक्यसम्बन्धिसादृश्यस्य निमित्तत्वे तु आवश्यकत्वात् शक्यसम्बन्ध एव निमित्तमित्युचितम्। तथा च लक्षणागौण्योर्न भेद एकनिमित्तकत्वात् इति चेन्न। यथा लक्षणावृत्तौ न सम्बन्धमात्रं निमित्तम्, 'गङ्गायां घोषः' इत्यनेन समुद्रतीरादिबोधप्रसङ्गात् किन्तु मुख्यार्थसम्बन्धिसम्बन्धस्तत्र निमित्तम् तथापि तत्र मुख्यार्थसम्बन्धित्वमतिप्रसङ्गभञ्जकतया सम्बन्धे विद्यमानमपि लक्षणावृत्तौ न निमित्तं तथा प्रसङ्गभञ्जकतया उपात्तो मुख्यार्थसम्बन्धो न वृत्तौ निमित्तं भवितुमर्हति। किन्तु सादृश्यमात्रमतो भिन्ननिमित्तकत्वात् लक्षणागौण्योर्भेदः।

किञ्च दूरे विद्यमानौ पनसचूतौ दृष्ट्वा 'सदृशावेवेमौ न सम्बद्धौ' इति भवति धीः। सम्बन्धत्वे तु सादृश्यस्य नैषा बुद्धिः स्यात्। न च तत्र सादृश्यस्य सम्बन्धत्वेऽपि संयोगरूपसम्बन्धान्तरस्य निरासः 'न सम्बद्धौ' इत्यनेन क्रियत इति चेन्न। 'न सम्बद्धौ' इत्यनेन सम्बन्धमात्रस्यैव निषेधात्। 'घटवान्न' इत्यनेन घटत्वावच्छिन्नस्य निषेधवत्। अन्यथा 'रूपी घटः' इत्यत्र रूपघटयोः संयोगाभावं निमित्तीकृत्य 'समवेता-वेवेमौ रूपघटौ, न सम्बद्धौ' इत्यपि प्रतीतिः स्यात्।

किञ्च 'सदृशावेव न सम्बद्धौ' इति धीः संयोगादिरूपसम्बन्ध-विशेषाभावविषया, न तु सम्बन्धसामान्याभावविषया, येन सादृश्यं सम्बन्धो न स्यादित्यादि यदुक्तं तत्तदैव युक्तं स्यात्। यदा सादृश्यस्य सम्बन्धत्वं सिद्धं स्यात्। न चैतत्सिद्धम्। प्रत्युत नास्त्येव सादृश्यस्य सम्बन्धत्वमिति प्रतिपादितम्।

किञ्च 'इमौ सम्बद्धौ सदृशौ च' इति प्रत्यययोर्विषयकृतवैलक्षण्यं सर्वसाक्षिकम्। सादृश्यस्य सम्बन्धत्वे न स्यादिदम्।

किञ्च यदि सादृश्यं सम्बन्धविशेषः तर्हि सम्बन्धोऽपि सादृश्यविशेषः स्यादिति चोद्यस्य किमुत्तरम्? सम्बद्धौ ह्येकदेशे वर्तेते इति एकदेशविशेषे वर्तमानत्वं द्वयोः सम्बद्धयोरन्यतरस्येवान्यतरस्याप्यस्तीति सम्बन्धोऽपि सादृश्यविशेषः प्रसज्येतेत्युक्ते नैवं लौकिकी प्रतीतिरस्तीत्येवोत्तरं खलु दातव्यम्। तत्तु समं प्रकृतेऽपि न हि 'सादृश्यं सम्बन्धः' इति प्रतीतिरस्ति लौकिकानाम्। प्रत्युत तदभाव एवोपपादितः। तदुक्तं जयतीर्थवर्यैः- 'तत्किं सादृश्यं सम्बन्धत्वेन प्रतियन्ति लौकिकाः?[५६] इति। तत्किमिति काकुः। प्रतियन्ति= जानन्तीत्यर्थः। न हि जानन्तीति यावत्।

तस्मात् यत्र मुख्यार्थसम्बन्धो निमित्तं सा लक्षणा। यत्र तु सादृश्यं निमित्तं सा गौणी। इत्येवं भिन्ने एवेमे वृत्ती।

॥ इति षष्ठः परिच्छेदः ॥

---

५६. न्या.सु. प्रकृत्यधिकरणे पृ.सं. १८९५

## ॥ अथ सप्तमः परिच्छेदः ॥

## ७. वृत्तीनां प्राबल्यदौर्बल्यचिन्ता ; उपसंहारश्च ।

अभिधा,लक्षणा,गौणी चेति वृत्तित्रये अभिधा मुख्यवृत्तिः; लक्षणा-गौण्यौ त्वमुख्यवृत्ती । एतासु तिसृषु मुख्यवृत्त्या एव प्राबल्यमित्यत्र नास्ति विप्रतिपत्तिः । 'मुख्यवृत्तिः' इति शब्द एवास्याः वृत्त्यन्तरात् प्राबल्यं सूचयति । वृत्त्यन्तरनैरपेक्षेण शीघ्रबोधकत्वादस्याः प्राबल्यम् । उपजीव्यत्वाच्च । लक्षणागौण्योः मुख्यवृत्तिसापेक्षबोधकत्वाद्दौर्बल्यम् ।

रूढिर्योगो योगरूढिश्चेत्यभिधायां त्रैविध्यमुक्तम् । मुख्यवृत्तिभूतास्वेतासु तिसृषु रूढेर्योगाच्च सकाशात् योगरूढिः प्रबला । रूढियोगयोस्तु योगाद्रूढिः प्रबला[१] । अमुख्यवृत्तावपि लक्षणातो गौणी प्रबला । एवञ्च प्राबल्यक्रमेणैवं वक्तव्यम्- योगरूढिः, रूढिः, योगः, गौणी, लक्षणा चेति ।

### ७.१. योगरूढिः प्रबलतमा -

रूढेर्योगाच्च योगरूढेः प्राबल्यादेव निरुपपदेन पङ्कजशब्देनोत्सर्गतो जलकमलस्यैव प्रतीतिः । न तु रूढिमात्रेण स्थलकमलस्य । न वा योगमात्रेण कुमुदभेकादेः । 'पङ्कजं कुमुदमानय' इत्यत्र तु योगरूढार्थग्रहणे बाधात् योगमात्रेण कुमुदधीः । 'पूर्वायोगे परग्रहः' इत्युक्तत्वात् ।

एवं 'तद्विजिज्ञासस्व, तद्ब्रह्म' इत्यादौ वेदेऽपि ब्रह्मादिशब्देन योग-रूढ्या परब्रह्मण एव धीः । नतु रूढिमात्रेण कमलासनजीवराश्यादि-धीः । 'अथ कस्मादुच्यते ब्रह्मेति । बृहन्तो ह्यस्मिन् गुणाः' इति श्रुत्या

---

१. अत्र मुख्यवृत्तित्रये पङ्कजादिशब्देषु रूढेर्योगाच्च योगरूढिः प्रबला । ... रूढियोगयोस्तु योगाद्रूढिः प्रबलेति तया योगस्यापहारः । त.तां.,पृ.सं. १९४

योगस्य 'तदेव ब्रह्म परमं कवीनाम्' इति श्रुत्या रूढेश्चावगमेन ब्रह्मशब्दस्यास्य परब्रह्मणि विष्णौ योगरूढत्वात् । एवमेव 'नारायणं महाज्ञेयम्' इत्यादौ नारायणादिशब्दैरपि योगरूढ्या विष्णोरेव धीः । न तु -

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥

इति स्मृतिसिद्धयोगमात्रेणाबाश्रयवस्तुमात्रस्य । सुष्ठूपपादितमेतत्सर्वं जन्माधिकरणचन्द्रिकायाम्[2] ।

### ७.२. योगाद्रूढिः प्रबला -

रथं करोतीति व्युत्पत्त्या रथकारशब्दः रथकर्तरि यौगिकः । सङ्करजातौ तु रूढः ।

"शूद्रायां करभो वैश्यान्माहिष्यो विट्स्त्रियां नृपात् ।
रथकारस्तु माहिष्यात् करभ्यां यस्य सम्भवः ॥"

इत्युक्तेः । 'वर्षासु रथकारोऽग्नीनादधीत' इत्यत्र रथकर्तृत्वयोगेन त्रैवर्णिकपरत्वं रथकारशब्दस्याशङ्क्य रूढ्या सङ्करजातिपरत्वमुक्तमाद्यपादीयोपान्त्याधिकरणे । तदेतेन योगाद्रूढेः प्राबल्यं व्यञ्जितम् ।

'मण्डपं पश्य' इत्युक्ते हि गृहविशेषस्यैव धीर्भवति रूढ्या । न तु योगेन मण्डपानकर्तुः । 'कपिला गौः' इत्युक्तेऽपि श्रोता कपिलवर्णां गां झटित्यवगच्छति रूढ्या । न तु योगेन मर्कटनाशिकाम्[3] ।

---

२. ता.चन्द्रिका - १.१.२.

३. कपिं लुनाति= छिनत्तीति तादृशीति व्युत्पत्त्या ।

रूढेर्योगात्प्राबल्यं तूपजीव्यत्वेन[४] । अवयवे रूढिं विना समुदाये योगासम्भवेन योगो रूढिमुपजीवति । अवयवस्यापि यौगिकत्वे तदवयवस्याप्येवमिति अनवस्थाप्रसङ्गेन पूर्वपूर्वयोगासिध्योत्तरोत्तरयोगासिद्धेर्मूलक्षतेः । तदुक्तं कर्मनिर्णये-

'अनवस्थानिवृत्त्यर्थं यौगिके रूढिकल्पना'[५] इति । एवं शीघ्रत्वाच्चैतस्य प्राबल्यम् । रूढार्थानुभवो वर्णश्रवणमात्रात् भवतीति शीघ्रः[६] ।

रूढार्थस्य बाधे तु योगार्थग्रहः । यथा 'मण्डपं भोजय' इत्यत्र । 'मण्डपं भोजय' इत्यादौ रूढ्यर्थगृहविशेषस्य भोजनान्वयायोग्यत्वात् रूढार्थगृहसम्बन्धिपुरुषः मण्डपपदेन लक्षणया बोध्यत इति मीमांसकमतम् । तदिदमसाधु भाति । अवयवशक्त्यैव मण्डपानकर्तुर्बोधे सति तत्त्यागे बीजाभावात् । न च मण्डपशब्दस्य रूढत्वात् यौगिकार्थो न बुध्यत इति वाच्यम् । योगरूढत्वादस्य शब्दस्य । (यौगिकरूढत्वादिति नैयायिकाः) योगरूढे च रूढ्यर्थबाधे योगार्थस्यैव झटित्युपलब्धेः । समुदायशक्त्यसम्भवेऽन्तरङ्ग-क्लृप्तावयवशक्तावेव बुध्यवताराच्च । अन्यथा 'पङ्कजं कुमुदमानय' इत्यत्रापि पङ्कजशब्दस्य कुमुदे लक्षणा स्यात् । न चेष्टापत्तिः । मुख्यार्थबाधाद्यनुसन्धानाभावात् । न ह्यत्र योगस्य बाधकमस्ति । प्रबलाया रूढेरयोग्यतया निवृत्तौ योगेनैव मण्डपानकर्तुः पङ्कजनिकर्तुर्वा बोधो भवति ।

---

४. तदुक्तं ऋग्भाष्ये श्रीमन्मध्वाचार्यैः -

रूढिमेव समाश्रित्य विभज्यार्थान्यथाक्रमम् ।
विशेषगुणपूर्त्यर्थं विष्णौ योगार्थमानयेत् ।। इति । ऋ.भा.

५. क.निर्णयः । ६. त.तां., पृ.सं. १९८

**इत्थञ्च रूढेरसम्भवे योगस्यैव ग्रहणम् । न तु लक्षणायाः । योगस्याप्यसम्भवे लक्षणाया इति प्रामाणिकः सम्प्रदायः ।**

**७.३. लक्षणातो गौणी प्रबला -**

अमुख्यवृत्तावपि गौणीतो लक्षणा जघन्या । अत एवोक्तं सन्न्याय-रत्नावल्यां 'पूर्वायोगे परग्रहः' इत्यनुव्याख्यानव्याख्यानावसरे 'परम-मुख्यार्थासम्भवे मुख्यार्थः स्वीकार्यः । तदसम्भवे गौणार्थः । तदसम्भवे लाक्षणिकः' इति[७] ।

ननु किंनिमित्तं गौण्याः लक्षणातः प्राबल्यम्? शीघ्रत्वमेव तत्र निमित्तमिति ब्रूमः । सिंहशब्दस्य येन माणवकेनान्वयानुपपत्तिस्तत्रैव माणवके वृत्तेः गौण्याः शैघ्र्यम् । गङ्गाशब्दस्य तु येन घोषेणान्वयानुप-पत्तिस्तं विहायान्यत्र तीरे वृत्तेर्लक्षणायाः मान्द्यम् ।

ननु 'नीलो घटः' इत्यादौ गुणवाचिनो नीलशब्दस्य येन घटेनान्व-यानुपपत्तिस्तत्रैव लक्षणा दृष्टा 'नीलवान् घटः' इति मनुबर्थलक्षणा-श्रयणात् इति चेन्न । किमयं गुणगुणिनोरभेदवादिन आक्षेपः? आहो भेदवादिनः? आद्ये नीलघटयोरभेदेन नास्त्येवान्वयानुपपत्तिः । द्वितीयेऽपि नास्त्येव तत्र लक्षणेत्युत्तरम् । 'तदस्यास्त्यस्मिन्निति मतुप्' इति सूत्रे 'गुणवचनान्मतुपो लुगिष्टः' इत्यनुशासनात् 'नीलो घटः' इत्यत्र मतुपो लोपेन नीलशब्दस्य शक्त्यैव नीलवद्बोधकतया तत्र लक्षणाया एवा-भावात् । अतः शीघ्रत्वाद्गौणी लक्षणातः प्रबला ।

---

७. सन्न्यायरत्नावली - आनन्दमयाधिकरणे ।

८. न्या.सु. पृथगुपदेशाधिकरणे, पृ.सं. ४२३०

यद्वा न्यायसुधोक्तरीत्या लक्षणातः प्राबल्यं गौण्याः[९]। सुधोक्तेरयं सारः- तत्त्वमसीत्यत्र गौणी चेत् प्रधानं पदद्वयं मुख्यार्थम्। अप्रधानं सामानाधिकरण्यमात्रं सादृश्ये गौणम्। पररीत्या लक्षणा चेत्पदद्वय-ममुख्यार्थम्, सामानाधिकरण्यमात्रं मुख्यमिति प्रधानबाधादनेकबाधाच्च लक्षणा जघन्येति।

अयं च न्यायो यद्यपि तत्त्वमस्यादिजहदजहल्लक्षणास्थले एव। 'सिंहश्चैत्रः' इत्यत्र सिंहसम्बन्धिनि सिंहसदृशे च चैत्रे लक्षणा चेत् सिंहप्रातिपदिकमात्रस्य बाधेनानेक-बाधाभावात्। तथापि एकस्यापि प्रधानस्य बाधात् तत्रापि लक्षणा जघन्येति ज्ञेयम्[९]।

गौण्याः द्राग्धीजनकत्वात् लक्षणायास्तु विलम्बेन बोधकत्वात् गौणीतोऽस्याः जघन्यत्वमित्येवात्रानुगतो हेतुः। गौण्यां हि सदृशमात्रे तात्पर्यमिति एकार्थघटादिपदादिव तात्पर्यविषये द्राग्धीः। लक्षणायान्तु क्वचित् (मञ्चाः क्रोशन्तीत्यादौ) सम्बन्धे तात्पर्यम्, क्वचित् (गङ्गायां घोष इत्यादौ) तद्द्वारा पूतत्वे, क्वचित्तु (इदं गङ्गोदकमित्यादौ) शीतलत्वादाविति वैरूप्यात् नानार्थाक्षादिशब्दादिव तात्पर्यविषये विलम्बेन धीरिति लक्षणा जघन्या।

ननु 'तस्मात्परममुख्यत्वं विष्णावन्यत्र मुख्यता। उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः'[१०] इत्यनुव्याख्याने भगवता आनन्दतीर्थमुनिना लक्षणायाः गौणीतः पूर्वमुद्दिष्टत्वात् गौणीतो लक्षणाया एव प्राबल्यमभिप्रेतं भाति। लक्षणाया जघन्यत्वोक्तौ कथं मूलाचार्यमूलेन न विरोधः? इति

---

९. त.तां., पृ.सं. २०८ १०. अ.व्या., श्लो. ३३७

चेन्न। उत्तरत्र तत्रैव -

> 'मुख्यमात्रतया रूढं सर्वमभ्युपगम्यते ।
> सर्वेषामपि शब्दानां गौणाद्यं तदयोगतः ।।'[११]

इति गौण्याः प्राथम्योक्त्या, न्यायविवरणेऽपि तेनैवानन्दतीर्थमुनिना 'रूढोपचारो, रूढलक्षणा, उपचारो लक्षणा'[१२] इति उपचारापरपर्याय-गौण्याः लक्षणातः पूर्वमुद्देशेन च गौण्याः एव प्राबल्यस्य भगवतोऽभि-प्रेतत्वं निश्चीयते। उपलक्षणा च गौणी चेत्यानुपूर्वीपरिग्रहस्तु 'प्रयोग-युक्तसादृश्यं सम्बन्धो वाऽप्यमुख्यतः' इत्यव्यवहितलक्षणोक्त्यभि-प्रायेणेति विभावनीयम् ।

एवं गौण्यामपि अरूढगौणीतः रूढगौणी प्रबला । लक्षणायामपि अरूढलक्षणातो रूढलक्षणा प्रबलेति सिद्धान्तः[१३]। इत्थञ्च प्राबल्यानु-क्रमेणेत्थं वृत्तिक्रमः- परममुख्यवृत्तिः, मुख्यवृत्तौ योगरूढिः, रूढिः, योगः, रूढगौणी (रूढोपचारः) अरूढगौणी (उपचारः), रूढलक्षणा, अरूढलक्षणा चेति ।

### ७.४. उपसंहारः -

तदेवं द्वैतवेदान्तमनुसृत्य वृत्तयो निरूपिताः । परब्रह्म सर्वशब्द-वाच्यमिति द्वैतवेदान्तस्य डिण्डिमः । सर्वशब्दानां विष्णुवाचकत्वेऽपि न लोकव्यवहारविलोपादिप्रसङ्गः । परममुख्यवृत्त्या विष्णुवाचकानामेव तेषां मुख्यवृत्त्यादिनान्यत्रापि वृत्तेरभ्युपगमात्। अत्र निरूपिताभिर्वृत्तिभिः

---

११. अ.व्या.श्लो. ३५५ १२. न्या.वि.

१३. त.तां., पृ.सं. २१६

तत्तदर्थबोधनेन लोकव्यवहारादिनिर्वाहका एव शब्दाः परममुख्यवृत्त्या परब्रह्मवाचका इति निष्कण्टको निर्धारः ।

तदेतेनापि वग्ग्रन्थनेन वाचामगोचरोऽपि सर्वशब्दगोचरः श्रीधरः प्रीणात्विति सम्प्रार्थ्य विरम्यते ॥

**॥ शम् ॥**

# आकरग्रन्थाः

| सं. | ग्रन्थाः | सङ्केतनाम | ग्रन्थप्रणेता | प्रकाशकाः |
|---|---|---|---|---|
| १. | अनुव्याख्यानम् | अ.व्या. | श्रीमन्मध्वाचार्याः | प्रो.के.टि.पाण्डुरङ्गिमहोदयेन संशोध्य प्रकाशितम्।(१९९१) |
| २. | अमरकोशः | अ.को. | अमरसिंहः | एन्. रङ्गनाथशर्मणा संशोधितम् । प्रकाशकः-काव्यालयः। |
| ३. | ऋग्भाष्यम् | ऋ.भा. | श्रीमन्मध्वाचार्याः | श्री. बन्नञ्जे गोविन्दाचार्यैः संशोधितम् । प्रकाशकः-अखिलभारतमाध्वमहामण्डलम् । (१९७५) |
| ४. | ऐतरेय आरण्यकम् | ऐ.आ. | - | - |
| ५. | कलाटीका | क.टी. | बालमभट्टः | वैयाकरणसिद्धान्तलघुमञ्जषाग्रन्थस्य टीका । प्रकाशकः- चौखम्बा संस्कृत प्रतिष्ठानम् । (१९८९) |
| ६. | कर्मनिर्णयः (खण्डार्थनिर्णयः) | क.नि. | श्रीमन्मध्वाचार्याः | पि.पि. लक्ष्मीनारायणोपाध्यायैःसंशोधितम् । प्रकाशकः- श्रीविद्यामान्यतीर्थश्रीपादाः |
| ७. | कारिकावली | कारि | विश्वनाथः | श्री सि. शङ्कररामशास्त्रिणा संशोधितम् । प्रकाशनम्-चौकाम्बा सुरभारती प्रकाशनम् । (१९८८) |
| ८. | काव्यप्रकाशः | का.प्र. | मम्मटभट्टः | प्राच्यविद्यासंशोधनालयः मैसूरु । (१९७७) |

| ग्रन्थः | संकेतः | कर्ता | प्रकाशनम् |
|---|---|---|---|
| ९. काव्यप्रकाशटिप्पणी | का.प.टि. | एन्.एस्. वेङ्कटनाथाचार्यः | प्राच्यविद्यासंशोधनलायः, मैसूरु (१९७७) |
| १०. चषकटिप्पणी | च.टि. | श्रीमन्नारीकृष्णाचार्यः | श्रीमन्मध्वसिद्धान्ताभिवृद्धिकारिणीसभा । (१९८३) |
| ११. तर्कताण्डवम् | त.तां. | श्रीव्यासतीर्थाः | प्राच्यसंशोधनालयः(O.R.I)मैसूरु । (१९३८) |
| १२. तत्त्वप्रकाशिका | त.प्र. | श्रीजयतीर्थश्रीमच्चरणाः | आर्.एस्. पञ्चमुखी (१९९४) |
| १३. तन्त्ररहस्यम् | तं.र. | | |
| १४. तन्त्रवार्तिकम् | तं.वा. | | |
| १५. तन्त्रसारसङ्ग्रहः | तं.सा.सं. | श्रीमध्वचार्याः | डा. वि. प्रभञ्जनाचार्यैः सम्पादितम् । प्रकाशनम्-श्रीमन्माध्वराद्धान्तसंवर्धकसभा,उडुपि । (१९९७) |
| १६. तर्कसङ्ग्रहः | त.सं. | अन्नभट्टः | चौखम्बा संस्कृत संस्थानम्,वाराणसी । (१९९७) |
| १७. तन्त्रसिद्धान्तरत्नावली | तं.सि.र. | | |
| १८. तात्पर्यचन्द्रिका | ता.चं. | श्रीव्यासतीर्थाः | प्राच्यसंशोधनालयः(O.R.I)मैसूरु । (१९३८) |
| १९. दिनकरी | दिन | महादेवभट्टः | श्री सि. शङ्कररामशास्त्रिणा संशोधितम् । प्रकाशनम्-चौकाम्बा सुरभारती प्रकाशनम् । (१९८८) |
| २०. न्यायकौस्तुभः | न्या.कौ. | महादेवभट्टः | तञ्जावूरु महाराज शरभोजी सरस्वती महाग्रन्थालयः,तञ्जावूरु । (१९८२) |

| | | | |
|---|---|---|---|
| २१. न्यायदर्शनम् | न्या.द. | गौतमः | अमरेन्द्रमोहनतर्कतीर्थेन संस्कृतम् । Mushiram Manohara Publishers Pvt.Ltd. (1985) |
| २२. न्यायदीपः | न्या.दी. | श्रीराघवेन्द्रतीर्थाः | व्याख्यानमिदम् । प्रकाशनम्- प्राच्यसंशोधनालयः (O.R.I)मैसूरु । (१९३८) |
| २३. न्यायपरिशुद्धिः | न्या.प. | वेदान्तदेशिकाः | श्रीवेदान्तदेशिकग्रन्थमालायांप्रथमसम्पुटम् । प्रकाशकाः- ए.सम्पत्कुमाराचार्याः (१९४०) |
| २४. न्यायविवरणम् | न्या.वि. | श्रीमध्वाचार्याः | बन्नञ्जे गोविन्दाचार्यैः संशोधितम् । प्रकाशकः-अखिलभारतमाध्वमहामण्डलम् । (१९७५) |
| २५. न्यायविवरणम् (२) | न्या.वि. | श्रीमध्वाचार्याः | पण्डितराजकृष्णाचार्येण उडुपिनगरस्थप्रभाकरमुद्रणालये मुद्रापितं सटीकन्यायविवरणम् । (शा.क.- १९३९) |
| २६. परिमलः | परि | श्रीराघवेन्द्रतीर्थाः | प्रकाशनम्- श्रीमन्मध्वसिद्धान्ताभिवृद्धिकारिणीसभा । १९३३ |
| २७. पाणिनीयधातुपाठः | पा.धा.पा. | | |
| २८. पाणिनिसूत्रम् | पा.सू. | पाणिनिः | |
| २९. पदार्थतत्त्वचिन्तामणिः | प.त.चि. | गङ्गेशोपाध्यायः | चौखम्बासंस्कृतप्रतिष्ठानेन प्रकाशितम् । (१९९०) |
| ३०. प्रकरणपञ्चिका | प्र.पञ्चि. | | |

| | | | |
|---|---|---|---|
| ३१. प्रमाणपद्धतिः | प्र.प. | श्रीजयतीर्थाः | टिप्पण्यष्टकसमेता, सवणूरु गोविन्दनाम्ना मुद्रापिता (१८५३) |
| ३२. प्रमाणपद्धति-राघवेन्द्रटिप्पणी | प्र.प.रा.टि. | श्रीराघवेन्द्रतीर्थाः | टिप्पण्यष्टकसमेता प्रमाणपद्धतिः सवणूरु गोविन्दनाम्ना मुद्रापिता ।(१८५३) |
| ३३. प्रमाणलक्षणम् | प्र.ल. | श्रीमध्वाचार्याः | पि.पि.लक्ष्मीनारायणोपाध्यायैः संशोधितम् । दशप्रकरणस्य प्रथमो भागः । |
| ३४. प्रमाणपद्धतिः वेदेशटिप्पणी | प्र.वे.टि. | वेदेशतीर्थाः | टिप्पण्यष्टकसमेतायां प्रमाणपद्धतौ । |
| ३५. प्रकाशः | प्रका | श्रीराघवेन्द्रतीर्थाः | प्रकाशकाः-प्राच्यसंशोधनालयः (**O.R.I**) मैसूरु। (१९३८) |
| ३६. प्रभाव्याख्यानम् | प्र.व्या. | रायनरसिंहपण्डितः | कारिकावली-मुक्तावलीसहितं प्रकाशितं चौखम्बासंस्कृतप्रतिष्ठानेन । (१९८८) |
| ३७. ब्रह्मसूत्रम् | ब्र.सू. | श्रीवेदव्यासः | |
| ३८. ब्रह्मसूत्रभाष्यम् | ब्र.सू.भा. | श्रीमध्वाचार्याः | आर्.एस्.पञ्चमुखी |
| ३९. भाट्टचिन्तामणिः | भा.चि. | | |
| ४०. भाल्लवेयश्रुतिः | भा.श्रु. | | |
| ४१. भागवतम् | भाग. | वेदव्यासः | गीताप्रेस्, गोरखपुरम् । |

| | | | |
|---|---|---|---|
| ४२. महाभाष्यम् | म.भा. | पतञ्जलिः | चौखम्बा सुरभारती प्रकाशनम् |
| ४३. महाभारतम् | भार | वेदव्यासः | गीताप्रेस्, गोरखपुरम् । |
| ४४. मङ्गलाष्टकम् | म.अ. | राजराजेश्वरतीर्थाः | |
| ४५. मधुमती | मधु | रविभट्टाचार्यः | काव्यप्रकाशिकाव्याख्या । प्राच्यसंशोधनालयः(**O.R.I**)मैसूरु। |
| ४६. मनुस्मृतिः | म.स्मृ. | मनु | मोतीलाल् बनारसीदास् । |
| ४७. मीमांसाभ्युदयः | मी.अ. | | |
| ४८. मुक्तावली | मुक्ता. | विश्वनाथतर्कपञ्चाननः | श्री सि. शङ्कररामशास्त्रिणा संशोधितम् । प्रकाशनम्-चौखाम्बा सुरभारतीप्रकाशनम् । (१९८८) |
| ४९. यादुपत्यटिप्पणी | या.टि. | यदुपत्याचार्याः | षट्टिपणीसहितन्यायसुधाग्रन्थः श्रीमन्मध्वसिद्धान्ताभिवृद्धिकारीणीसभया प्रकाशितः । |
| ५०. रहस्यटीका | रह. | मथुरानाथतर्कवागीशाः | प.त.चिन्तामणिटीका । |
| ५१. वाक्यार्थचन्द्रिका | वा.चं. | विद्याधीशतीर्थाः | न्यायसुधाटिप्पणी । षट्टिपणीयुक्तन्यायसुधायाम्। |
| ५२. वाक्यपदीयम् | वा.प. | भर्तृहरिः | सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,वारणासीतः प्रकाशितम् । (१९८०) |

| | | | |
|---|---|---|---|
| ५३. वासुदेवश्रुतिः | वा.श्रु. | | |
| ५४. विष्णुतत्त्वनिर्णय-टीका | वि.त. नि.टी. | श्रीजयतीर्था | श्रीविद्यामान्यतीर्थश्रीपादैः प्रकाशिते दशप्रकरणे । |
| ५५. वेदापौरुषेयवादः | वे.अ.वा. | जालिहाळ् श्रीनिवासाचार्यः | |
| ५६. वेदान्तपरिभाषा | वे.प. | धर्मराजाध्वरिः | प्रकाशकः- खेमराज श्रीकृष्णदासः,मुम्बई । |
| ५७. वेदान्तपरिभाषाटीका (मणिप्रभा) | वे.पे.टी. | अमरदासः | खेमराजकृष्णदासेन प्रकाशिते वेदान्तपरिभाषापुस्तके । |
| ५८. वैयाकरणभूषणसारः | वै.भू.सा. | | |
| ५९. वैयाकरणसिद्धान्त लघुमञ्जूषा | वै.सि.मं. | नागेशभट्टः | पण्डित माधवशास्त्रिणा संशोधितम् । चौखम्बासंस्कृतप्रतिष्ठानेन प्रकाशितम् । १९८९ |
| ६०. वैयाकरणसिद्धान्त लघुमञ्जूषाटीका (कुञ्चिका) | वै.सि. मं.टी. | दुर्बलाचार्यः | चौखम्बासंस्कृतप्रतिष्ठानेन प्रकाशितं कुञ्चिकाकलाव्याख्या-द्वयोपेता वै.सि.लघुमञ्जूषा । |
| ६१. व्यासपाणिनि-भावनिर्णयः | व्या.पा. भा.नि. | | |

| | | | |
|---|---|---|---|
| ६२. व्याकरणशास्त्रेतिहासः | व्या.शा.इ. | लोकमणिदाहालः | भारतीयविद्याप्रकाशनम्,वारणासी । |
| ६३. शक्तिवादः | श.वा. | गदाधरभट्टाचार्यः | जयकृष्णदास-हरिदासगुप्तेन प्रकाशितः । (१९८४) |
| ६४. शब्दकौस्तुभः | श.कौ | | |
| ६५. शाबरभाष्यम् | शा.भा. | शबरमुनिः | लक्ष्मीनारायण तिवारी,वारणासी । |
| ६६. शिखामणिटीका | शि.टी. | रामकृष्णाध्वरिः | वेदान्तपरिभाषाटीका । खेमराज कृष्णदासेन प्रकाशितम् । |
| ६७. शेषवाक्यार्थचन्द्रिका | शे.वा.चं. | केशवभट्टारकाः | षट्टिपणीयुतन्यायसुधायाम् । |
| ६८. श्रीमन्न्यायसुधा | न्या.सु. | श्रीजयतीर्थाः | षट्टिपणीयुतः न्यायसुधाग्रन्थः श्रीसत्यप्रमोदतीर्थश्रीमच्चरणैः मुद्रापिता । (१९८३) |
| ६९. श्रीनिवासतीर्थीया सुधाटिप्पणी | श्री.सु.टि. | श्रीनिवासतीर्थाः | न्यायसुधायां षट्टिपणीयुतायाम् । |
| ७०. श्रीमद्विष्णुतत्त्वनिर्णयः | श्री.वि.त.नि. | श्रीमध्वाचार्याः | दशप्रकरणेषु । अखिलभारतमाध्वमहामण्डलम् । |
| ७१. श्रीमद्रामायणम् | श्री.रा. | वाल्मीकिः | गीताप्रेस्, गोरखपुरम् । |
| ७२. श्लोकवार्तिकम् | श्लो.वा. | कुमारिलभट्टः | रत्न पब्लिकेशन्स्, वारणासी । (१९८३) |
| ७३. सन्न्यायरत्नवाली | सन्न्याय | पद्मनाभतीर्थाः | |

| | | | |
|---|---|---|---|
| ७४. साहित्यदर्पणम् | सा.द. | विश्वनाथकविराजः | कृष्णदास अकादमी, वारणासी |
| ७५. सुधाविवृतिः | सु.वि. | सत्यतीर्थयतिः | षट्टिपणीयुतायां न्यायसुधायाम् इयमेका । |
| ७६. रघुवंशम् | रघुवंशम् | कालिदासः | मोतीलात् बनारसीदास् । |
| ७७. The Anomaly of Vyatireki Inference | | B.K. Bhattacharya | |

